# KAVYAMALA.



A collection of old and rare Sanskrit Kâvyas
Nâtakas, Champûs, Bhâṇas, Prahasanas,
Chhandas, Alankâras &c.

PART XIII.

EDITED BY

PANDIT KEDÂRANÂTH DURGÂPRASÂD.

REVISED BY

WÂSUDEV LAXMAṆ SHÂSTRÎ PANSÎKAR.



PUBLISHED

BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR OF "NIRṆAYA-SÂGAR" PRESS,

BOMBAY.

1916.

॥ श्रीः ॥

# काव्यमाला ।

नाम

नानाविधप्राचीनकाव्यनाटकचम्पूभाणप्रहसन-
च्छन्दोलंकारादिसाहित्यग्रन्थानां
संग्रहः ।



## त्रयोदशो गुच्छकः ।



जयपुरमहाराजाश्रितपण्डितश्रीदुर्गाप्रसादतनयपण्डितकेदार-
नाथशर्मणा तथा मुम्बापुरवासिपणशीकरोपाह्वविद्वद्वर-
श्रीलक्ष्मणशर्मतनुजनुषा वासुदेवशर्मणा च
संशोधितः ।



द्वितीयं संस्करणम् ।



स च

मुम्बय्यां

तुकाराम जावजी श्रेष्ठिभिः

स्वीये निर्णयसागराख्यमुद्रणयन्त्रालये स्वायसाक्षरैर्मुद्रयित्वा प्रकाशितः ।

शाकः १८३८, ख्रिस्ताब्दः १९१६.

(अस्य ग्रन्थस्य पुनर्मुद्रणादिविषये सर्वथा निर्णयसागरमुद्रायन्त्रालयाधिपते-
रेवाधिकारः ।)

मूल्यमेको रूप्यकः ।

# अनुक्रमणिका।

# काव्यमाला ।

श्रीमद्रामभद्रदीक्षितविरचितं

## वर्णमालास्तोत्रम् ।

अन्तः समस्तजगतां यदनुप्रविष्ट-
माचक्षते मणिगणेष्विव सूत्रमार्याः ।
तं केलिकल्पितरघूद्वहरूपमाद्यं
पङ्केरुहाक्षमनिशं शरणं प्रपद्ये ॥ १ ॥

आम्नायशैलशिखरैकनिकेतनाय
वाल्मीकिवाग्जलनिधिप्रतिबिम्बिताय ।
कालाम्बुदाय करुणारसमेदुराय
कस्मैचिदस्तु मम कार्मुकिणे प्रणामः ॥ २ ॥

इन्दुं प्रसादमवतंसयता त्वदीयं
कोपंकरे हुतवहं वहता हरेण ।
शङ्के जगत्त्रयमनुग्रहनिग्रहाभ्यां
संयोज्यते रघुपते समयान्तरेषु ॥ ३ ॥

ईदृग्विधस्त्वमिति वेद न सोऽपि वेदः
शक्नोति कः स्थितमवेक्षितुमुत्तमाङ्गे ।
श्रोतुं क्षमं न तु दृशोक्षितुमप्यतस्त्वां
सर्वे विदन्तु कथमीश कथं स्तुवन्तु ॥ ४ ॥

---

१. पद्मनयनम्. २. वेदः. ३. कालमेघाय. ४. शिरसि.

उष्णांशुबिम्बमुदधिस्मयसस्मरौ[1]स्म-
ग्रावा च तुल्यमजनिष्ट गृहं यथा ते।
वाल्मीकिवागपि मदुक्तिरपि प्रभुं त्वां
देव प्रशंसति तथा यदि कोऽत्र दोषः॥ ५॥

ऊढः पुरासि विनै[2]तान्वयसंभवेन
देव त्वया किमधुनापि तथा न भाव्यम्।
पूर्वे जना मम विनेमुरसंशयं त्वां
जानासि राघव तदन्वयसंभवं माम्॥ ६॥

ऋक्षं प्लवंगमपि रक्षसि चेन्महात्म-
न्विप्रेषु किं पुनरथापि न विश्वसामः।
अत्रापराध्यति किल प्रथमद्वितीयौ
वर्णौ तवौदनतया निगमो विवृण्वन्॥ ७॥

नॄणां न केवलमसि त्रिदिवौकसां च
राजा यमार्कमरुतोऽपि यतस्त्रसन्ति।
दीनस्य वाङ् मम तथापि न ते नवा स्या-
त्कर्णे रघूद्वह यतः ककुभोऽपि जाताः॥ ८॥

क्लृप्तामपि व्यसनिनीं भवितव्यतां मे
नाथान्यथाकुरु तव प्रभुतां दिदृक्षोः।
चक्रे शिलापि त[3]रुणी भवता तदास्तां
मायापि यद्घटयते तव दुर्घटानि॥ ९॥

एकं भवन्तमृषयो विदुरद्वितीयं
जानामि कार्मुकमहं तु तमद्वितीयम्।
श्रुत्याश्रिता जगति यद्गुणघोषणा सा
दूरीकरोति दुरितानि समाश्रितानाम्॥ १०॥

ऐशं शरासमचलोपममिक्षुवल्ली-
भङ्गं बभञ्ज किल यस्तव बाहुदण्डः।

---

१. गर्वः. २. गरुडेन. ३. तरुणी अहल्या.

तस्य त्वशीतकरवंशवतं शशंस
किं दुष्करं भवति मे विधिपाशभङ्गः ॥ ११ ॥
**ओ**जस्तव प्रहितशेषविषाग्निदण्डैः
स्पष्टं जगद्भिरुपलभ्य भयाकुलानाम् ।
गीतोक्तिभिस्त्वयि निरस्य मनुष्यबुद्धिं
देव स्तुतोऽसि विधिविष्णुवृषध्वजानाम् ॥ १२ ॥
**औ**त्कण्ठ्यमस्ति दशकण्ठरिपो ममैकं
द्रक्ष्यामि तावकपदाम्बुरुहं कदेति ।
अप्येति कर्म निखिलं मम यत्र दृष्टे
लीनाश्च यत्र यतिभिः सह मत्कुलीनाः ॥ १३ ॥
**अं**भोनिधाववधिमत्यवकीर्य बाणा-
न्किं प्लव्यवानसि ननु श्वशुरस्तवायम् ।
उष्मापनेतुमथवा यदि बाणकण्डू-
र्देवायमस्त्यनवधिर्मम दैन्यसिन्धुः ॥ १४ ॥
**अः**श्रान्तमर्हति तुलाममृतांशुबिम्बं
भग्नाम्बुजद्युतिमदेन भवन्मुखेन ।
अस्मादभूदनल इत्यकृतोत्तरीश
सत्या कथा भवतु साधुविवेकभाजाम् ॥ १५ ॥
**क**ल्याणमावहतु नः कमलोदरश्री-
रासन्नवानरभटोग्रग्रहीतशेषः ।
श्लिष्यन्मुनीन्प्रणतदेवशिरःकिरीट-
दाम्नि स्खलन्दशरथात्मज ! ते कटाक्षः ॥ १६ ॥
**खं** वायुरग्निरुदकं पृथिवी च शब्दः
स्पर्शश्च रूपरसगन्धमपि त्वमेव ।
..........................दययार्तबन्धो
धत्से वपुः शरशरासभृदभ्रनीलम् ॥ १७ ॥

गङ्गा पुनाति रघुपुंगव यत्प्रसूता
यद्रेणुना च पुपुवे यमिनः कलत्रम् ।
तस्य त्वदङ्घ्रिकमलस्य निषेवया स्यां
पूतो यथा पुनरवेऽपि तथा प्रसीद ॥ १८ ॥

घण्टाघनं घनितकोटिशरासनं ते
लुण्टाकमस्तु विपदां मम लोकनाथ ।
जिह्वालतां वहति यद्भुजगो रिपूणा-
मुष्णैरसृग्भिरुदरंभरिणा शरेण ॥ १९ ॥

प्राङ्ङस्यवाङसि परेश तथासि तिर्यङ्
ब्रूमः किमन्यदखिला अपि जन्तवोऽसि ।
एकक्रमेऽपि कति वा भुवि न म्रियन्ते
मन्दस्य राघव सहस्व ममापराधान् ॥ २० ॥

चण्डानिलव्यतिकरक्षुभिताम्बुवाह-
दम्भोलिपातमिव दारुणमन्तकालम् ।
स्मृत्वापि संभविनमुद्विजते न धन्यो
लब्ध्वा शरण्यमनरण्यकुलेश्वर त्वाम् ॥ २१ ॥

छिन्नं निजं कुहनया[1] मृगरूपभाजो
नक्तंचरस्य[2] न किमाविरकारि रूपम् ।
त्वत्पत्रिणापि रघुवीर ममाद्य माया-
गूढस्वरूपविवृतौ तव कः प्रयासः ॥ २२ ॥

जन्तोः किल त्वदभिधा मणिकर्णिकायां
कर्णे जपन्हरति कश्चन पञ्चकोशान् ।
इत्यामनन्ति रघुवीर ततो भवन्तं
राजाधिराज इति विश्वसिमः कथं वा ॥ २३ ॥

झङ्कारिभृङ्गकमलोपमितं पदं ते
चारुस्तव प्रणयचारणकिन्नरौघम् ।

---

१. कपटेन. २. राक्षसस्य मारीचस्य.

जानामि राघव जलाशयवासयोग्यं
स्वैरं वसेत्तदधुनैव जलाशये मे ॥ २४ ॥
ज्ञानेन मुक्तिरिति निश्चितमागमज्ञै-
र्ज्ञानं क्व मे भवतु दुस्त्यजवासनस्य ।
देवाभयं वितर किं त्वसकृत्प्रपत्त्या
मुह्यन्नपि स्मर पुरैव कृतां प्रतिज्ञाम् ॥ २५ ॥
टङ्कारमीश भवदीयशरासनस्य
ज्यास्फालनेन जनितं निगमं प्रतीमः ।
तेनैव राघव भवानवगम्यमान-
स्त्रासं निरस्य सुखमातनुते बुधानाम् ॥ २६ ॥
ठात्कृत्य मण्डलमखण्डि यदुष्णभानो-
र्देव त्वदस्त्रदलितैर्युधि यातुधानैः ।
शङ्के ततस्तव पदं विदलय्य वेगा-
त्तैरद्भुतं प्रतिकृतिर्विदधे वयस्य ॥ २७ ॥
डिम्भस्तथास्मि रघुवीर तथा दयस्व
लभ्यं यथा कुशलवत्वमपि क्षितौ मे ।
किंचिन्मनो मयि निधेहि तव क्षतं किं
व्यर्था भवत्वमनसं गृणतीः श्रुतिस्त्वाम् ॥ २८ ॥
ढक्कां त्वदीययशसामधुनापि शृण्मः
प्राचेतसस्य[1] फणितं[2] भरताग्रजन्मन् ।
सत्ये यशस्तव शृणोमि मृकण्डुसूनो-
र्धाताप्यतो जगति कोऽस्तु भवादृशोऽन्यः ॥ २९ ॥
त्राणं समस्तजगतां तव किं न कार्यं
सा किं न तत्र करणं करुणा तवैव
अख्यातिकार्यकरणे तव नेति या वा-
ङ्मुख्या न सा रघुपते भवति श्रुतीनाम् ॥ ३० ॥

---

१. वाल्मीकेः. २. सूक्तिम्.

तत्त्वं पदे पदमसीति च धानि देव
तेषां यदस्म्यभिलपन्नुपलब्धुमर्थान् ।
सेवे पदद्वयमतो मृदुलं तवादौ
यद्दारुणोरपि ततो भवदर्थलाभः ॥ ३१ ॥
प्रोथं यदुद्वहसि भूमिवहैकदंष्ट्रं
विश्वप्रभो विघटिताभ्रघटाः सटा वा ।
रूपं तदुद्भटमपास्य रुचास्य दिष्ट्या
त्वं शम्बरारिरपि कैतवशम्बरारिः ॥ ३२ ॥
दग्ध्वा निशाचरपुरीं प्रथितस्तवैको
भक्तेषु दानवपुरत्रितयं तथान्यः ।
तस्याशरासुरसमस्य गुणैः प्रभो मे
पुर्यष्टकप्रशमनेन लभस्व कीर्तिम् ॥ ३३ ॥
धत्ते शिरांसि दश यः सुकरो वधोऽस्य
किं न त्वया निगमगीत सहस्रमूर्ध्ना ।
मोहं ममामितपदं यदि देव हन्याः
कीर्तिस्तदा तव सहस्रपदो बहु स्यात् ॥ ३४ ॥
नम्रस्य मे भव विभो स्वयमेव नाथो
नाथो भव त्वमिति चोदयितुं बिभेमि ।
येन स्वसा दशमुखस्य नियोजयन्ती
नाथो भव त्वमिति नासिकया विहीना ॥ ३५ ॥
पर्याकुलोऽस्य किल पातकमेव कुर्व-
न्दीनं ततः करुणया कुरु मामपापम् ।
कर्तुं रघूद्वह नदीनमपापमुर्व्यां
शक्तस्त्वमित्ययमपैति न लोकवादः ॥ ३६ ॥
फल्गूनि यद्यपि फलानि न लीप्सते मे
चेतः प्रभो तदपि नो भजति प्रकृत्या ।

---

१. 'शम्बरारिर्मनसिजः' इत्यमरः. २. शूर्पणखा.

मूर्त्यन्तरं व्रजवधूजनमोहनं ते
जानाति फल्गु न फलं भुवि यत्प्रदातुम् ॥ ३७ ॥
बर्हिःशतग्रथितकेशमनर्हवेष-
मादाय गोपवनिताकुचकुङ्कुमाङ्कम् ।
ह्रीणो न राघव भवान्यदतः प्रतीमः
पत्न्या ह्रिया विरहितोऽसि पुरा श्रियेव ॥ ३८ ॥
भद्राय मेऽस्तु तव राघव बोधमुद्रा
विद्रावयन्त्यखिलमान्तरमन्धकारम् ।
मन्त्रस्य ते परिपुनन्ति जगद्यथा ष-
डष्टाक्षराण्यपि तथेति विवृण्वतीव ॥ ३९ ॥
मन्दं निधेहि हृदि मे भगवन्नटव्यां
पाषाणकण्टकसहिष्णु पदाम्बुजं ते ।
अङ्गुष्ठमात्रमथवात्र निधातुमर्ह-
माक्रान्तदुन्दुभितनूकठिनास्थिकूटम् ॥ ४० ॥
यज्ञेन देव तपसा यदनाशकेन
दानेन च द्विजगणैर्विपदिप्यसे त्वम् ।
भाग्येन मेऽजनिमृषा यदिदं यतस्त्वां
चापग्रहात्परमबुध्यत जामदग्न्यः[1] ॥ ४१ ॥
रम्योज्ज्वलस्तव पुरा रघुवीर देहः
कामप्रदो यदभवत्कमलालयायै[2] ।
चित्रं किमत्र चरणाम्बुजरेणुरेव
कामं ददौ न मुनये किमु गौतमाय ॥ ४२ ॥
लङ्केशवक्षसि निविश्य यथा शरस्ते
मन्दोदरीकुचतटीमणिहारचोरः ।
शुद्धे सतां हृदि गतस्त्वमपि प्रभो मे
चित्ते यथा हर चिरोपनतामविद्याम् ॥ ४३ ॥

---

१. परशुरामः. २. लक्ष्म्यै.

वन्दे तवाङ्घ्रिकमलं श्वशुरं पयोधे-
स्तानं भुवश्च रघुपुंगवरेखया यत् ।
वज्रं बिभर्ति जगदार्तिगिरं विभेत्तुं
विद्यां नताय वितरेयमिति ध्वजं च ॥ ४४ ॥
शंभुः स्वयं निरदिशद्गिरिकन्यकायै
यन्नाम राम तव नामसहस्रतुल्यम् ।
अर्थं भवन्तमपि तद्वहदेकमेव
चित्रं ददाति गृणते चतुरः किलार्थान् ॥ ४५ ॥
षट् ते विधिप्रभृतिभिः समवेक्षितानि
मन्त्राक्षराणि ऋषिभिर्मनुवंशकेतो ।
एकेन यानि गुणितान्यपि मानसेन
चित्रं नृणां त्रिदशतामुपलम्भयन्ति ॥ ४६ ॥
सर्गस्थितिप्रलयकर्मसु चोदयन्ति
माया गुणत्रयमयी[1] जगतो भवन्तम् ।
ब्रह्मेति विष्णुरिति रुद्र इति वृथा ते
नाम प्रभो दिशति चित्रमजन्मनोऽपि ॥ ४७ ॥
हंसोऽसि मानसचरां महतां यतस्त्वं
संभाव्यते किल ततस्तव पक्षपातः ।
मय्येनमप्ययन चेद्रघुनन्दन स्या-
ज्जिष्णोरपि त्रिभुवने समवर्तता ते ॥ ४८ ॥
लक्ष्मीकृतोऽजनि यथैव जलाशयाना-
मेको रुषा····तथा कृपयापि कार्यः ।
अन्योऽपि कश्चिदिति चेदहमेव वर्ते
तादृग्विधास्तपनवंशमणे किमन्यैः ॥ ४९ ॥
क्षन्तुं त्वमर्हसि रघूद्वह मेऽपराधा-
न्सर्वे सहाननुवधूरपि ते पुराणी ।

---

१. सत्त्वरजस्तमोगुणाः.

वासालयं च तनुभृत्कमलं मदीयं
कान्ता परापि नहि किं कमलालया ते ॥ ५० ॥
इत्थं ममास्तु वद मर्त्यनिगद्यमान
त्रैय्यन्तमन्त्रमुखरीकृतपादपीठ[1] ।
राजाधिराज कृपया रघुवीर वर्ण-
मालास्तवं त्वमवकर्णयितुं प्रसीद ॥ ५१ ॥

इति श्रीमद्रामभद्रदीक्षितविरचितं वर्णमालास्तोत्रं संपूर्णम् ।

---

## श्रीमद्वादिचन्द्रनिर्मितं
## पवनदूतकाव्यम् ।

राजा राज्ञीं खगपतिहृतां नामतः श्रीसुतारां
ध्यायंश्चित्ते जगति विदितां शीलसौभाग्यभाग्यैः ।
दूतं मोहात्पवनमहृदं प्राहिणोदश्रुनेत्रः
प्रायो मोहो भवति भविनां बोधशून्यत्वहेतुः ॥ १ ॥
भूम्याधारा जलगिरिनगाः साप्यधारि त्वया चे-
त्किं तेऽसाध्यं भवति वद मे मित्र तेनार्थिभावम् ।
यातस्तस्मात्कथय कथितं योषितः क्षेममुच्चैः
प्रायः शक्तः सकलविषयेऽशक्तिकानां हि याच्यः ॥ २ ॥
क्षित्यां नीरे हुतभुजि परव्योम्नि काले विशाले
त्वं लोकानां प्रथममकथि प्राणसंत्राणतत्त्वम् ।
तस्माद्वातोधर चलगते तान्वियोगे हि नार्याः
स्यान्नैवान्तर्विपुलकरुणः सत्त्वरक्षानपेक्षः ॥ ३ ॥
एते वृक्षाः सति नवघनेऽप्यत्र सर्वत्र भूमौ
बोभूयन्ते न हि बहुफलास्त्वां विनेति प्रसिद्धिः ।
तस्मात्तांस्त्वं घनफलधनान्संप्रयच्छन्प्रकुर्याः
प्रायः प्राप्तो भवनमतुलां पुष्टितामातनोति ॥ ४ ॥

---

1. वेदान्त.

सार्धं दारैर्हसितवदनैः क्रीडनासक्तचित्ता-
ञ्शुण्डादण्डैः कलितगिरिभिर्भूरजः स्वोच्चपृष्ठौ ।
त्वं नागेन्द्रान्किरत उचितान्स्वस्य सङ्गेन कुर्वे-
न्यायाः प्रायो भवति महतां संगतेः पापहानिः ॥ ५ ॥

स्वाङ्गामोदप्रसरविजिताशेषपुष्पद्रुमाणां
नानाभूषद्युतिचयहतप्रान्तनागीमणीनाम् ।
स्वर्नारीणां सुरतमभितः कुर्वतीनां स्वभर्त्रा
स्वेदाम्भस्त्वं वनभुवि हरन्सौख्यहेतुः प्रभूयाः ॥ ६ ॥

भिल्ल्याः शीर्षे भ्रमरसदृशे स्थापितां स्वस्य पत्या
तीरे नद्याः पवन रमता पुष्पमालां कुटानाम् ।
तां निर्गन्धां बहुसमयतः संप्रजानन्द्वितीयं
दूरं नीत्वा नवसुममरं स्थापयन्याहि वृक्षान् ॥ ७ ॥

वेगाद्याताः पथि तव परार्थान्विधातुः प्रकृत्या
ये संरोधं प्रतततनवः कुर्वते गण्डशैलाः ।
तांस्त्वं सर्वानभिनवबलैः पातयेः स्तब्धवृत्ती-
न्केषां स्थानं भवति पुरतः स्थायिनां सद्बलानाम् ॥ ८ ॥

संतापेऽस्मिन्प्रबलतरणेः संज्वलद्वह्निकल्पे
छायाक्षेत्रं तव सुदिशतो वार्मुचो नैव नाशः ।
चेत्तत्कारी निजबलवशात्तर्हि ते ताप उच्चै-
र्वीर्यं तस्माच्चतुरमतिना नैव सर्वत्र योज्यम् ॥ ९ ॥

व्यादायास्यं कथमपि पुरो भक्षितुं त्वां स्वपन्त्यो
निर्यद्धालाहललवगणा दीर्घपृष्ठा गरिष्ठाः ।
तांस्त्वं हन्तुं निजसखमलं वह्निमग्रे प्रकुर्या-
स्त्वेषां भीतिर्न भवति यतो भेदजेया द्विषन्तः ॥ १० ॥

मार्गे श्रान्तः कथमपि तदा वाहनं चातिशोभं
सारङ्गं त्वं क्रमितगगनं शृङ्गभिन्नाम्बुवाहम् ।

आरुह्याग्रे सुखदमतुलं वेगतः संप्रगच्छेः
पादैर्गन्तुं न भवति सतां दूरमार्गो हि शक्यः ॥ ११ ॥

स्त्रीभिः शीर्षे मधुमदकृतां संधृतां पुष्पकाना-
मालिप्तानां वपुषि सरसैः केसरैश्चन्दनानाम् ।
संक्षिप्तानां श्रुतिपुटयुगे मूल्यकस्तूरिकाणां
गृह्णन्गन्धं बहुमधुरिमक्रान्तगेहान्तराणाम् ॥ १२ ॥

पुत्रः सीतां दशमुखहृतां तावको दूरनाथां
तत्संदेशैर्ज्ञपितकुशलैर्जीवयामास वेगात् ।
तत्किं चित्रं त्वकमिह पदे संस्थितस्तां च पैत्र्ये
प्रायः कार्यं लघुजनकृतं नाधिके चित्रकारि ॥ १३ ॥

रात्रौ स्त्रीणां सुरतसमये प्रेक्षितुं खेचराणां
नग्नं चाङ्गं पवन सततं नेत्रदत्तानुरागम् ।
हर्म्यान्तःस्थान्प्रहततमसो दीपकान्मा विहन्याः
प्रायः सन्तः सकलसमये रङ्गभङ्गे न शूराः ॥ १४ ॥

नीरं नद्या उपकृतिकरं शोषयन्नान्धवत्या-
स्तत्कंजानां परमिह भुवां यादसां च प्रहन्ता ।
तस्माद्रक्षञ्जलमविकलं येन ते धर्मराशिः
कार्ये कार्यं परमविदुषा हिंसयैवात्र लोके ॥ १५ ॥

गच्छन्तीनां निशि पतिगृहं येऽन्धकारं सृजन्ति
तास्त्वं स्त्रीणां स्थगितनयनं छादयित्वाब्जताराः ।
दूरीकुर्या विरहिविपदानम्बुवाहान्स्वशक्त्या
प्रायः सन्तः शिशुतरुणिषु ह्यार्द्रचित्ता भवन्ति ॥ १६ ॥

तस्याः शुम्भत्तटभवनगस्थायिहंसांगतापं
मन्दं यांस्त्वं बहुगिरिवशात्संनिवार्यास्सदिष्टः ।
तत्पक्षैश्च द्विगुणितवपुश्चालितैश्चामराभै-
र्भूयाः सन्तो न हि परकृतं चोपकारं सहन्ते ॥ १७ ॥

वध्वो विद्याधरकुलभवाः संनिसर्गैकरूपा
यासां साम्यं ललिततनवो यान्ति नो नाककन्याः।
तास्त्वं पश्यन्स्थिरतरगतिर्मा स्म भूर्मित्र मार्गे
धीराः ख्यातास्त इह भुवने येऽन्तराये न मन्दाः॥ १८॥

ग्रीष्मातापैर्ग्लपितवपुषामर्थिनां चातकाना-
मुच्चास्यानां कृषिकरनृणां संददानोऽम्बु मेघः।
याता मार्गे प्रबलबलिना नैव हन्यस्त्वयासौ
प्रायो रक्षाः परहितकरादायिनो दत्तसाराः॥ १९॥

नीला अद्रौ बहुफलधृतो मानवानामगम्या
दानाद्भीताः सहजकृपणा ये नगा मुक्तमार्गाः।
तांस्त्वं धुत्वा हिततनुधृतस्तत्फलैरेणवर्गा-
न्कुर्वंस्तृप्तान्पवनपदवीं योषकेष्वग्रगण्याम्॥ २०॥

प्राणानां तत्तरुणिविरहे कुर्वतां निर्गमं द्रा-
ग्दक्षेहं तान्पुनरिति तनावाशयास्थानकं च।
मोहादित्थं पवन गमनं ह्यागमं च प्रयातां
रक्षा कार्या विततकरुणां कुर्वतात्र त्वयालम्॥ २१॥

गच्छन्द्रष्टा करिणमतुल देवराजस्य मार्गे
साधोः सारं चरणयुगलं वन्दितुं वागतस्य।
शुण्डाघातैर्गिरितटनगान्पातयन्तं प्रचण्डै-
र्भूमौ शश्वन्निजतनुभरात्पीडयन्तं फणीशम्॥ २२॥

त्वं गङ्गाया जललवकणैस्तत्तटावर्तिपुष्पै-
र्मुक्तारूपैः समदमधुपोद्भूतझङ्कारसारैः।
भूत्वा शीतः परिमलतनुस्तन्नगैश्चात्तवेगो
हन्या ध्याने निहतमनसां योगिनां बुद्धतायम्॥ २३॥

शाटी भूमेर्विपिनवसतेर्योगिनः किं जटा वा
किं निर्मोको धरणफणिनश्चागतस्यात्र लोके।

किं निःश्रेणिः शिखरपदवीं गन्तुकामस्य चाद्रे-
गङ्गां दृष्ट्वा सुतटनटतो भाविनी तेऽत्र शङ्का ॥ २४ ॥

भूयो द्रष्टा जगदधिपतेरालयं तीर्थकर्तु-
स्तीक्ष्णैः शृङ्गैर्हतघनपतद्वारिसंसिक्तदेहम् ।
नृत्यच्छक्रा तनुकरकजोद्भूतरेणुभ्रमौघं
प्रान्तोद्यानावनिभवखगध्वानदत्तप्ररावम् ॥ २५ ॥

भीमाटव्याममरवनितास्पर्धिरूपाभिमाना
वेणीबन्धग्रथितकुसुमा भूर्जपत्रापवस्त्राः ।
गुञ्जायुक्ततृणमणिगला यत्र भिल्लादिनार्य-
स्तास्त्वं पश्येर्यदि हि भवतो दृष्टिसृष्टिश्च देवान् ॥ २६ ॥

गच्छेर्वन्दंस्त्वमपि शमिनः संजयं तस्य साधोः
पादौ नन्तुं निजगृहगणैः खेचरैरापतद्भिः ।
सिद्धौ यत्र वलनजटिनः साधयामास पुत्रो
ज्वालामाली खगगणनतामर्ककीर्तिर्महौजाः ॥ २७

तत्संदृष्टेर्भवतु भवतो विघ्नराशेः प्रहाणिः
सद्यश्चोग्रायुधगणकराः शत्रवो यान्तु नाशम् ।
भूयाद्भूयः प्रतिपदमलं मङ्गलं मञ्जुलं च
प्राप्तोदन्तः पुनरिह मया सौख्यदः संगमस्ते ॥ २८ ॥

दुःखानि त्वं समगतवधोर्मित्र जानासि सम्य-
ग्विश्वप्राणः श्रिततनुमतां वृद्धकारुण्यभावः ।
तस्मात्तेऽहं पदमुपगतः सर्वलोकानपेक्षः
कृत्यं ते यद्भवति सदयं तत्त्वयापादनीयम् ॥ २९ ॥

सद्यः कार्यं कृतमिह नृणां दत्तमाह्लादकारि
तस्माच्छीघ्रं पवन मनसः साधयेष्टं प्रगम्य ।
त्वत्तः कार्यं न भवति पुनर्नेति चित्तप्रतीतिः
कालं नीत्वा विहितमिह तन्नैव चित्तं धिनोति ॥ ३० ॥

श्रान्तो गच्छन्निजविधिवशात्संपतज्जीर्णकूपे
तृण्यां दोष्णा धरति पथिकस्तं च सालं न पातुम् ।
तद्दुःखार्तो निजतनुमलं प्रक्षिपेत्तेन साकं
तर्हि त्वं किं जगति विदितो मेऽत्र कार्यं न कुर्याः ॥ ३१ ।

नार्यो बह्व्यः सुकुलजनुषः सन्ति मे मित्र गेहे
सैकैव स्त्री निजवरगुणैश्चर्करीति प्रशोभाम् ।
नानादिक्को रविरपि तरां न प्रभात्यम्बरेऽस्मि-
न्पूर्वां काष्ठामुदयमतुलं संददानां विहाय ॥ ३२ ॥

नार्यस्तारामनु च भुवने भाग्यसौभाग्यवत्यो
नार्यस्तारामनु च भुवने शीलसंपन्निवासाः ।
नार्यस्तारामनु च भुवने भर्तृभक्त्येकरागा
नार्यस्तारामनु च भुवने दीनदानप्रदात्र्यः ॥ ३३ ॥

साक्षाद्भोगस्तव शुभतनोः पापतश्चातिदूरं
तर्हि स्वप्ने भवतु स पुनः सोऽपि मे सौख्यहेतुः ।
क्षीराभावे क्षुधितवपुषा तक्रकं किं न पेयं
आसिर्भद्रं कथमपि चिरान्नैव मूलप्रहाणिः ॥ ३४ ॥

संस्मर्तुर्मे सुरतसमये पादयोस्ते नटन्तं
सन्मञ्जीरैः श्रिततनुदवं लीलया नीलकण्ठम् ।
तत्पक्षैर्वा तनुसुखकरं स्वेदबिन्दुप्रमार्जं
कान्ते रात्रौ कथमपि चिरान्नेत्रयोर्नैव निद्रा ॥ ३५ ॥

गत्यास्ते वा स्मरणमसकृद्विप्रयोगे गजेन्द्रो
गच्छन्वेण्याः प्रविपुलवने कारयेश्चोत्फणो हि ।
चित्तं कान्ते प्रततमदनं केवलं नो दुनोति
वैसाः कञ्जोऽवधृतसुकलेश्चक्षुषोः संमुखोऽस्य ॥ ३६ ॥

गौरे कण्ठे विजितजलजे तद्वियोगस्य भीत्या
क्षिप्तो हारोऽसुरसुरमतो विप्रयासो मया न ।

कुर्वे किंवा विधिविलसिताच्चाधुना दुर्निवारा-
द्वृक्षाः शैलाः परमसरितो ह्यन्तरे संगता मे ॥ ३७ ॥

पादौ दृष्ट्वा वनभुवि तवानन्ददौ प्रेमबन्धा-
दात्मानं स्वप्रणतमभितो यावदीहे प्रकर्तुम् ।
तावत्पुष्पैस्तरुकपिगतेः संच्युतैश्छादितौ तौ
पापं तस्मिन्नपि न सहते संगमं सौख्यहेतुम् ॥ ३८

कृत्वा भूषां तव न च तनौ लोकयन्रूपमुच्चै-
र्लोकेऽत्यन्तं नयनरुचिरं लोकदृष्टिप्रदोषम् ।
हन्तुं स्वच्छे कनकसदृशे कज्जलं तत्कपोले
सद्यो दोषाकृतमिह मया संस्मरामि त्रिसंध्यम् ॥ ३९ ॥

हस्ताङ्घ्री ते वरमुखि सुखं नालकेल्यौ वनेजं
वक्षोजौ वा कटितटमलं श्यामकेशाः शिरस्याः ।
चक्रौ सिंहं फणिरिपुकुलं निर्जयन्ति स्म येशा(?)-
स्तेषां स्मर्तुर्मम च विरहे रात्रयो वर्षकल्पाः ॥ ४० ॥

घोरारण्यं विपुलनगरं कन्दरा स्वर्णगेहं
शय्या पौष्पी पृथुतरशिला व्यालरत्नानि दीपाः ।
पर्णाघो वा विमलमशनं त्वक्तरोर्देववासो
जानीथास्त्वं कमलनयनादर्शने भो ममापि ॥ ४१ ॥

अस्यां पुर्यां मुरजजनिताः कर्णरम्या निनादाः
प्रोत्सङ्गेहाः कनकघटिताः सूध्वजोत्तम्भिकुम्भाः ।
सा मेऽत्यन्तं सजलपरिखां तां विना दुःखबीजं
किं वारण्यं विविधविषमा भीतिदा यत्र भावाः ॥ ४२ ॥

मा देयास्त्वं जगति सरितां देहिनां जन्म मार्त्यं
देयास्त्वं चेत्कथमपि पुनस्तर्हि मा संप्रयोगम् ।
दत्त्वा तं भो प्रदयनिलयं मा विधेया वियोगं
भूयो भूयस्तव पदपुरश्चेदमभ्यर्थयामि ॥ ४३ ॥

जाने प्राणान्पवनकलितान्मामकांस्तद्वियोगे
याता नो चेत्कनकनृपतेश्चन्द्रकान्तेरिवाशु ।
धिक्तान्भूयः स्वजनहरणे ये प्रयान्त्युत्तराशां
सत्सौख्यानां मनसि सततं चिन्तितानां हि मिथ्या ॥ ४४ ॥

विद्या निद्या परमविदुषां जीवनं मेघमाला
वृक्षालीनां कृषिरथ नृणां वारिधिर्यादसां च ।
भृत्यौघानामतुलनृपतिर्व्यङ्गिनां भूरि वित्तं
सूर्योऽब्जानां जगति धनदश्चार्थिनां सा तथा मे ॥ ४५ ॥

तच्चिन्तातः सकलविषये शून्यमासीन्मनो मे
तस्माज्जाने न हितमहितं किं प्रकुर्वे ह्युपायम् ।
नो वा बुद्धिः प्रसरति परा किं प्रजल्पामि वाचं
प्रेष्यं पत्रं मम कथमथो संप्रभाषे ह्यभिज्ञाम् ॥ ४६ ॥

मद्दुःखात्सा श्रुतिमुपगता दुःखिनी संभवित्री
तस्माद्वाचं न हि तव यथा वर्तते मे कमुच्चैः ।
किं तत्सत्यं निजमतजनो दुःखमाप्नोति येन
तत्सत्यन्तो भवति हि मतो देहिनामिष्टसौख्यम् ॥ ४७ ॥

दानं साधौ जिनचरणयोरेकचित्ता प्रपूजा
उग्रं किंचित्परमविधिना संतपश्चेदकारि ।
तत्सामर्थ्याद्विहितविभवान्प्राणसंत्राणहेतो-
र्धर्मात्ते वा भवतु सुखदो योषितः संप्रदर्शः ॥ ४८ ॥

दैवाल्लब्धो वसति न सखे रत्नवर्गो हि रङ्के
नानामुक्ताकलितमतुलं दाम कण्ठे कपीनाम् ।
वाचोयुक्तिः शठजनमुखे सज्जने प्रेमहस्ते
नारी चैषा सुकृतवसतिर्यातपुण्याङ्कुरस्य ॥ ४९ ॥

वासाटव्याः समदरिपुणा नो हृतानेन चित्ता-
द्वेदस्तस्मान्न हि हृदि परस्तोषवृत्तिः कथंचित् ।

तां त्वं पूर्णां कुरु निजबलैः पापविद्याधरेशं
हत्वा युद्धे प्रबलबलिनो नो सहन्ते पराकम् ॥ ५० ॥
पात्रे दानाद्भवति विपदः संप्रहानिश्च केषां
केषां चोग्राद्गुरुमुखकृतासद्व्रताद्वाञ्छितातिः ।
इष्टाद्देवाद्भवति भुवने शत्रुनाशश्च केषां
भूयादेतत्त्रितयमचिरादेकतस्त्वत्सुमित्रात् ॥ ५१ ॥
सा मे सेना मदनविजये सारसर्वाङ्गयुक्ता
सा मे मित्रं परमहितकृत्सर्वलोकेऽप्यनूनम् ।
सा मे भूषातनुरुचिकरा सा च केल्यास्तडागः
संतापानां सहजहरणात्सा च दृष्टिः प्रवृत्तेः ॥ ५२ ॥
सा निःश्रेणिः परपदगतौ सार्गला दुःखरोधा-
त्सा मे मन्त्रो नगरवनितादृष्टिदोषं प्रहन्तुम् ।
सा मे वल्लिर्विपुलफलदा सा सरित्त्रब्धिनाशा-
त्सा मे लक्ष्मीर्विविधविभवानन्दसंसाधनाच्च ॥ ५३ ॥
चन्द्रश्चायं दहति विरहे योषितोऽङ्गं क्षपायां
त्वद्यानं तत्प्रकृतिपुरुषस्तेन संबोधयाब्जम् ।
संसारे भो मम विरचितः केवलं नैव दुःखं
सर्वेषां स्याः कृततनुमतां चक्रनेमिक्रमेण ॥ ५४ ॥
चन्द्रश्चैको न दहति परं दुःखदस्ते मृगोऽपि
नीचाः प्रायो विषमगतयो मानिताः सज्जनैश्च ।
नाहं चैको रघुपतिरपि श्रीशनाथोऽपि नेमिः
के केऽनेन प्रवरमनुजाः कष्टमार्गे न नीताः ॥ ५५ ॥
गोपः कामं जनयति शठो लोकसंतापहेतो-
र्धीमानीशो जगदुपकृतौ तं प्रहन्ति स्म मुक्त्वा ।
चन्द्रं चैषा परविकलता कुत्र तस्य प्रजाता
प्रायः कार्ये क्वचिदपि पुनर्योगिनोऽपि प्रमोहाः ॥ ५६ ॥

कंसो ध्वस्तो मधुरपि हतो मारितो मल्लवर्गः
किं त्रैलोके विहितमशुभं घातिता विष्णुनामी।
नैतद्युक्तं कृतमिह पुरा तत्सुलोका हितेषु
कामे चन्द्रे सरसविपिने कोकिले सद्वसन्ते॥ ५७॥

भार्या दूरं मधुरपि न वा चाक्षुषो नैव रम्यं
दृश्यं गेहं न भवति वने सर्वशस्या च सस्या।
एकः पापो दहति शशभृन्मे तनुं नेत्रगम्यः
कृष्णौ पक्षौ यदि च भवतो भाग्यतो नास्य दृष्टिः॥ ५८

क्षीरं नीरं पिबति जलधेः पङ्कमश्नाति भूमे-
र्नानाग्राहान्ग्रसति कठिनान्वाडवाग्निः स्वशक्त्या।
एकं चन्द्रं किमिति सरसं देहपित्तापहारं
दुष्टात्मानं भुवि विरहिणो नैव तं जन्मशत्रुम्॥ ५९॥

लब्धं चन्द्रं वदनकुहरे दैवतो राहुरेष
कस्मान्मुञ्चेज्जठरपिठरे नास्ति किंचित्प्रबोधः।
चेद्वा मुञ्चेत्कथमिह पुनः शंभुना स्थाप्यते के
निस्तापो यः सृजति विपदं किं न लब्धप्रविष्टः॥ ६०॥

तावच्चन्द्रो भ्रमतु गगने दीनवक्त्रा वियोगं
ह्युच्चैः स्वैरं लपतु परभृद्यावदस्या न गीतिः।
तावच्छोभा भवतु कमले नेत्रयोः कज्जलं नो
युष्मद्भाग्यादिह परमभूत्तद्धृतिः खेचरेण॥ ६१॥

तावत्तेजस्तपतु तपनेऽस्या न शीर्षे स्वचक्रं
शेषे कान्तिर्वसतु विमला वेणिबन्धो न यावत्।
जिष्णोश्चायं चरतु गगने सा न कौसुम्भवासा-
स्तेषां भाग्यैरिह परमभूद्विप्रयोगो मया सा॥ ६२॥

तद्वक्त्रं चेज्जयति शशिनं तत्पुरः किं च कंजं
वेणीनागं हरगलधृतं तद्विषः किं च पिच्छम्।

बाणान्नेत्रे मदननृपतेः खञ्जनः किं च खेट
ओष्ठावब्धे रमणममितो विद्रुमं किं च बिम्बा ॥ ६३ ॥
भृङ्गः पुष्पं जलधरजलं चातको गां प्रवत्सः
आम्रं पक्वं पिक इव वने राजहंसस्तडागम् ।
चक्रश्चक्रीं तरुकिसलयं नागराजस्तटिन्या-
स्तद्वत्कान्ताकलितकमला चिन्तयेद्यत्र शून्यः ॥ ६४ ॥
पुण्ये लक्ष्मीधनविकलतां पापपाके निदानं
संयोगेऽस्या इह न हि परं संप्रपश्यामि लिङ्गम् ।
मुक्त्वा त्वां भो जगति बहुनो किं प्रवच्मि प्रवाक्यं
कार्यो यत्नो भवति कियता येन तस्याश्च योगः ॥ ६५ ॥
दानं नो मे सकलजनतारोरदावापहारि
तीव्रं नो वा करणदमनं सत्तपोऽपि प्रसिद्धिम् ।
शुद्धा नो मे परमकरुणा यत्प्रभावाच्च तस्या
योगासारः पवन सुखदस्त्वां विनेति प्रजाने ॥ ६६ ॥
भाग्यं लक्ष्म्याः सकलशशिनः सत्कलां श्रीजिनेशा-
त्क्षान्तिं कीर्तिं मदनजनकाद्ब्रह्मणो भारतीं च ।
शीलं साधोः परमकरुणां ध्यानिनः कर्म पुंसां
संप्रार्थ्यालं नयनदयितं तच्छरीरं व्यधायि ॥ ६७ ॥
केषां श्लाघ्या विभवसहिता भारती वाथ लक्ष्मी-
र्वन्द्या गङ्गा जलधिजलगा गौः प्रमान्या हि केषाम् ।
दुर्गा ध्येया हरतनुगता शाक्तिकानां च शक्ति-
स्तुल्या वन्द्या मम विरहिणः सैव मान्या प्रचिन्त्या ॥ ६८ ॥
अन्यस्त्रीणां हृदयहरणे वर्धितात्माभिमानः
कस्तारायामसनिखगयो मुक्तलज्जो वराकः ।
भूमेरूर्ध्वान्तरमधिवसन्भूधरस्यापि काकः
किं वा जायात्सुरगिरिशिरः क्षुद्रजीवाद्यगम्यम् ॥ ६९

शक्रीश्चक्री धरणफणिभृन्नैव भङ्क्तुं समर्थ-
स्तस्याः शीलं किमिह खगराण्मेऽपरं मोहशङ्का ।
त्वं तच्छङ्कामपनय बलात्संनिधिं संप्रगम्य
प्रायो दृष्टं भवति सकलं वस्तुमात्रं प्रमाणम् ॥ ७० ॥

आश्वास्यैवं कथितवचनैस्तच्छुचं संप्रहृत्य
पश्चाद्गत्वामरपुरपतिं वाचमित्थं हि जल्पन् ।
किं चाज्ञातं विहितमधुना कोऽपदे तेऽनुरागः
प्रायो लोको भवति विकलः प्राक्च मृत्योरचिन्त्यात् ॥ ७१

गर्जत्यब्धे विलसति सदा चक्रचापेऽतिदीर्घे
वाणीं मुञ्चत्यथ कलगिरा कोकिलानां समूहे ।
शीतोद्गारे प्रसरति वने मार्गपक्षिव्रजे च
त्यक्तुं को वा प्रभुरिह हृदो वस्तुतो वामनेत्राम् ॥ ७२ ॥

उष्णान्वातान्क्षिपति दुरसा संहरत्यम्बुचक्र-
मन्तस्तापं जनयति परं बाधयत्यम्बुचारात् ।
ग्रीष्मस्यालं तपति तपने धारयत्यम्बुतृष्णां
तां योगीवानिशमजपदं चिन्तयामि त्रिकालम् ॥ ७३ ॥

नो वा हन्ति द्विरदमतुले शीतकाले मृगेन्द्रो
नो वा दूर्वा चरति समजोऽप्यत्र क्षुद्रः पशूनाम् ।
यत्र प्रातर्न पतति रुचः संनिधानेऽपि वह्ने-
र्विप्रस्तस्मिन्मम मनसिजस्तां विना बाधतेऽङ्गम् ॥ ७४ ॥

गत्या हंसीं कुवलयदलं चक्षुषा निर्जयन्त्याः
शुभ्रत्स्वर्णद्युतिचयतनोस्तर्जितानन्तलक्ष्म्याः ।
भो ताराया विषमविरहे वैरिणां बाणतुल्ये
मृत्योर्गेहं यदि नहि गतः सप्तवन्मेऽमरत्वम् ॥ ७५ ॥

विश्वं कुर्वन्विधिरथ वरं चन्द्रमध्ये गृहीत्वा
चक्रे तारामुखसरसिजं तेन छिद्राण्यभूवन् ।

तत्र व्योमावनिजनगणैर्दृश्यते चापरस्थं
भूमेश्छाया न मृगशशकौ नापि देहस्वभावः ॥ ७६ ॥
लोके वह्नेर्विरहदहनं संप्रजाने गरिष्ठं
कस्मात्प्रश्ने कृत इह जनस्तद्विशेषं ब्रवीमि ।
एकश्छेद्यो विपुलसलिलैर्मन्त्रवर्णैश्च कैश्चि-
दन्यः पापो विहितविधिरप्यत्र वर्धिष्णुभावः ॥ ७७ ॥
तेजोराशिं जगति दहनस्ते सखा मेऽतिदूरां
नार्यां प्रेक्षानयति यदि नो किंनिमित्तं हि तेजः ।
प्राप्तं द्रव्यं परजनकृते नो भवेदुन्मुखं य-
त्तस्यावश्यं किमिह महतां सर्वथा चात्मतापम् ॥ ७८ ॥
यस्या दृष्टेर्भवति विमदः शत्रुवर्गोऽभिमानी
वक्रः पन्थाः सततसरलो वारिधिः स्वल्पकूपा ।
खड्गो माला स्तभति करिराट् दस्युसंघो हि सार्थ-
स्तां तन्मुद्रां मम करगतां तत्कराब्जे धरस्व ॥ ७९ ॥
उष्णोच्छ्वासैः शुषितवदनां शीलरक्षार्तचित्तां
त्यक्तस्नानामसितवसनां नेत्रयुक्ताश्रुपातैः ।
त्वं तां दूनां खगपरिचितेर्मद्वपुः क्षेमवाचा
संतोप्यारं व्यपगतशुचं सर्वथा संप्रकुर्याः ॥ ८० ॥
सर्तव्योऽहं पथि च सरता येन मे भद्रमुच्चै-
र्नैवाहं त्वां कथमिति पुनः संप्रयुङ्क्तेऽस्तमित्रे ।
स्थाने चित्ते भवति भविनां संस्मृतिश्चित्तवृत्ति-
स्तच्चित्तं मे चलितचपलं किं स्मरामि त्वयैव ॥ ८१ ॥
दूर्वाटव्यां भवतु कुशलं सर्वदा चाशिषा मे
वेगादस्मिन्विजनविपिने तेऽस्तु मे पुण्ययोगः ।
कारं कारं रिपुमदहृतिं साधनीयं स्वकार्यं
किं वाच्यन्ते बहुबलवतो ज्ञातसर्वाङ्गवृत्तेः ॥ ८२ ॥

दीनं श्रुत्वा नृपतिवचनं संचचालातिवेगा-
त्पश्यन्ग्रामान्वनगिरितलारामभूदेशभागान् ।
दृष्ट्वा शत्रोश्चकितनयनः पत्तनं भूविशेषं
प्रायो दृष्टं जगति भविनां विस्मयादेश्च हेतुः ॥ ८३ ॥

दृष्ट्वा तारां प्रमुदितमनाः संजपन्ती जिनेशं
धिक्कुर्वाणां खचरवनितां शीलरत्नप्रभाभिः ।
विद्याधीशं स्मरशरवशं बन्धुवन्मानयन्ती
चित्ते भूयो विरहविधुरं स्वं पतिं चिन्तयन्तीम् ॥ ८४ ॥

दूतं मां श्रीविजयनृपतेश्चेतसा मानयस्व
पत्या दत्तां निजकरकजे मुद्रिकां त्वं धरेमाम् ।
जानीथा भो कतिपयदिनैर्निर्जितं खेचरेशं
जेयः शक्रो यदि हि बलिनस्ते प्रभोः कोऽन्यलोकः ॥ ८५ ॥

दीपे वह्नौ रविमणिकृते प्रोच्छलद्विस्फुलिङ्गे
क्षेप्तुं जीवं विषमविरहादुद्यतोऽरण्यमध्ये ।
तावद्दैवादमितगतिना जानता ते हृतिं च
प्रोक्तोदन्तं निखिलमचिराद्रक्षितः खेचरेण ॥ ८६ ॥

तस्मात्क्षेमं शशिमुखि वने वर्तते स्वामिनस्ते
योगो भावी गणितदिवसैर्नास्ति हेतुर्विलम्बे ।
तस्माद्भुक्तिं कुरु च सुभगे भूषयाङ्गं स्वकीयं
न स्युर्दुःखे परमगुणिनः कातराः संप्रजा ते ॥ ८७ ॥

अन्यां भार्यां सहज सुतनो क्रीडतो भूमिनाथा-
ज्जातः कोपो मनसि परमप्रीतितस्तेषु चित्ते ।
तस्माज्ज्ञात्वा विमुखवदनां त्वां प्रसन्नां प्रकर्तुं
नम्रो यावद्भवति चरणे संहतः स त्वया के ॥ ८८ ॥

पादाघातं कुसुमसदृशं मानयित्वा महीशः
कृत्वा तेऽग्रे शपथमतुलं चान्यगेहं प्रयातुम् ।

भूयो भूयस्तव पदकजे किं न लग्नोऽत्र पातः
स्वार्थं कर्तुं चतुरमनुजा मन्यते नापमानम् ॥ ८९ ॥

अन्तर्गूढं वचनमतुलं वायुतः संनिशम्य
स्वीयां स्मृत्वा कृतचविकृतिं गद्गदामश्रुपातम् ।
नीचेऽवज्ञां सृजति गुणिनश्चेत्प्रपीडां कदाचि-
त्किं वा पूज्ये प्रणयिनि जने सर्वतश्चोत्तमे च ॥ ९० ॥

स त्वद्दुःखादशनमतिशं नात्ति न स्नाति नैति
विद्यां नो संस्मरति कुलजां पैतृकं नापि चापम् ।
आदत्ते नो रुचिरवचनं वक्ति पश्येन्न मृत्युं
मृत्युं कर्तुं प्रभवति परं बन्धुभिर्वारितोऽपि ॥ ९१ ॥

गेहे तेऽसौ विरहघटिकां नैव सोढुं समर्थो
मासं किंवा परकरगतायास्तवातिप्रसक्ता ।
नीराद्दूरं स्थलमिह भुवो यादसां दुःखहेतुः
किं वा तत्र ह्यनलवशतो मुर्मुरा भासुराङ्गाः ॥ ९२ ॥

तारे नारी विषमविषयासक्तचित्तप्रचारः
किं तद्दुःखं जगति कथितं यन्न चाप्नोति जीवः ।
वाक्यं चेदं विशदमतुलं योगिनो यद्वदन्ति
तत्ते भर्ता नयनविषयं मे कृतं भुङ्क्ष्व पाकम् ॥ ९३ ॥

तद्वत्त्वं भो हृदयसरले मा स्म युमन्यरेथा(?)
दुःखेऽवश्यं तनुरपि तरां तानवं संप्रयाति ।
संपश्यंस्तत्तव च दयितः सोऽपि दीनाङ्गदीप्ति-
स्तस्मात्त्वं चेत्स्वपरसुखदा तर्हि मुञ्चात्मपीडाम् ॥ ९४ ॥

चित्ते तेऽसौ प्रवसति नृपस्तर्हि किं चर्करीषि
मिथ्याश्रूणां स्नपितवदनं संनिपातं ह्यसम्यक् ।
चेन्नास्तीशो हृदयवसतौ प्रेमभारः कुतस्ते
तस्याभावे किमिति सुभगे निर्निमित्तोऽत्र शोकः ॥ ९५ ॥

स्वस्थीकृत्वा तरुणितिलकं संययौ खेचरेशं
न्यक्कुर्वन्तं चमरपवनैरात्मनो धर्ममार्गम् ।
प्रत्यागच्छन्वननृपशिरोमौलिमाणिक्यभाभिः
पादाब्जे स्वे मधुपरचनां संदधानं सभान्ते ॥ ९६ ॥

नत्वावोचच्छृणु खगपते मामकीं सारवाचं
तारां हृत्वा कथमिह हृदि स्वास्थ्यमाप्नोति मूढ ।
कुक्षौ कृत्वा विषमगरलं जीवितुं कोऽप्यधीश-
स्तस्मात्त्याज्या परकुलवधूर्वाञ्छता स्वात्मभद्रम् ॥ ९७ ॥

नो क्रीडातो न हि धनमदान्नापि चाज्ञानभावा-
त्कामान्नो मे गजपतिगमाः सन्ति गेहे खचर्यः ।
ज्ञातुं तेजोऽप्रमितमहसो भर्तुरस्यां च युद्धे
तेनानीता प्रवसति भुजे तत्तदा यान्तु शीघ्रम् ॥ ९८ ॥

श्रुत्वा चैतत्खगपजननी संनिवार्य स्वसूनुं
युद्धं कर्तुं विधृतधनुषं सार्पयत्तां च तस्मै ।
साध्यासाध्यं निजमतिवशाद्ये प्रगम्य स्वकार्यं
कुर्वन्तोऽमी क्वचिदपि जना नापमानं प्रयान्ति ॥ ९९ ॥

तां लात्वा श्रीविजयनृपतेः संमुखं चागतस्य
योद्धुं सैन्यैर्जितखगरिपोः श्रीप्रभाचन्द्रकीर्तेः ।
सूर्यश्चक्रीशिवविरहिणे चक्रवाकाय दत्ता
दुष्टो वायुर्न भवति धृतिः कस्य चेष्टं प्रकर्तुः ॥ १०० ॥

पादौ नत्वा जगदुपवृतावर्धसामर्थ्यवन्तौ
विघ्नध्वान्तप्रसरतरणेः शान्तिनाथस्य भक्त्या ।
श्रोतुं चैतत्सदसि गुणिना वायुदूताभिधानं
काव्यं चक्रे विगतवसनः स्वल्पधीर्वादिचन्द्रः ॥ १०१ ॥

इति सूरिवादिचन्द्रकृतं पवनदूताभिधं काव्यं समाप्तम् ।

---

## पण्डरीविट्ठलाख्यकविविरचितो दूतीकर्मप्रकाशः ।

गणेशं भारतीं नत्वा रसिकानन्दवृद्धये ।
पण्डरीविट्ठलाख्येन दूतीकर्म प्रकाश्यते ॥

दूती पारंगमा दौत्यव्यापारे संनिवेदनम् ।
विरहस्य च तस्यास्तु कर्म संघटनादिकम् ॥ १ ॥
सखी विप्रश्निका चेटी स्वयंदूती च शिल्पिनी ।
विचित्रवचना गानवती धात्री कुमारिका ॥ २ ॥
प्रासङ्गिनी मालिनी च स्खलिता प्रतिवेशिनी ।
परचित्तविशेषज्ञा चेष्टासंकेतकोविदा ॥ ३ ॥
रजकी सौचिकी वेषधारिणी मणिहारिणी ।
कथिनी नापिकी चेति सैकविंशतिधा मता ॥ ४ ॥
एताः साधारणा दूत्यो नायिकास्वखिलास्वपि ।
तच्चारित्रमिति ज्ञातुं ब्रह्मणापि न शक्यते ॥ ५ ॥
तथापि लौकिकश्रेष्ठरसिकानन्दकारणम् ।
दूतीकर्मैकदेशेन लक्ष्मोदाहरणं ब्रुवे ॥ ६ ॥

---

सखी विश्वासविश्रामकारिणी पार्श्वचारिणी ।
मण्डनोपालम्भशिक्षापरिहासादिका यथा ॥ १ ॥

चक्रे चन्द्रमुखी प्रदीपकलिका धात्री धरामण्डले(१)
तस्या दैववशाद्दशापि चरमा प्रायः समुन्मीलति ।
तद्धूमः शिरसा न तेन सहसा श्रीकृष्ण निक्षिप्यतां
स्नेहस्तत्र यथा तथा न भवति त्रैलोक्यमन्धं तमः ॥

(इति सखी ।)

ज्योतिःसामुद्रिकाभिज्ञा मालिनी चेति भाषिणी ।
तव योग्योऽपरः कामो भवेद्विप्रश्निका यथा ॥ २ ॥

---

१. अयं हि कविवरः कदा कं धरामण्डलं मण्डयांचकारेति न ।

निर्माय स्वयमेव विस्मितमनाः सौन्दर्यसारेण यं
स्वव्यापारपरिश्रमस्य कलशं वेधाः समारोपयन्।
कंदर्पं पुरुषाः स्त्रियोऽपि दधते दृष्टे च यस्मिन्सति
द्रष्टव्यावधिरूपमाप्नुहि मतिं स्वस्त्यस्तु ते संततम्॥
(इति विप्रश्निका।)

**संधानमधुरा चेटी स्वरतो गुप्तचारिणी।**
**छादयन्ती भोगचिह्नं तत्कार्यवचनैर्यथा॥ ३॥**

नीरङ्गाधरता कथं तव वचः संजल्पतस्तत्पुरा
किं भ्रष्टालकपत्रकं तव पतेर्मानप्रणामान्मुहुः।
दीर्घोच्छ्वासतरः कथं द्रुततरादाधावतस्तेऽन्तिकं
युक्तं चेटि किमत्र तस्य वसनं विश्वासहेतोस्तव॥
(इति चेटी।)

**भावादिशकलक्षेपाद्वचनच्छलभेदतः।**
**सूचयन्ती स्वयंदूती तत्कार्यवचनैर्यथा॥ ४॥**

मध्याह्नेऽथ घने निदाघसमये तापो घनो वर्तते
कुञ्जे शीतवटे सुशीतलतटे भो पान्थ विश्रामय।
एकाकी च भवाननं च तरुणी शून्या प्रपा विद्यते
लज्जा मे गदितुं त्वमेव चतुरो जानासि कालोचितम्॥
(इति स्वयंदूती।)

**तत्तद्रूपगतं भावं पटे रूपं प्रदर्श्य च।**
**विजानत्युभयोः प्रीतिं चतुरा शिल्पिनी यथा॥ ५॥**

सा त्वं मन्मथमञ्जरी स च युवा भृङ्गस्तवैवोचितः
श्लघ्यं तद्भवतोः किमन्यदपरं किं त्वेतदाशास्महे।
भाग्यैर्गोग्यसमागमेन युवयोर्मानुष्यमाणिक्ययोः
श्रेयानस्तु विधेर्विचित्ररचनासंकल्पशिल्पश्रमः॥
(इति शिल्पिनी।)

**सामभेदतिरस्कारश्लेषान्योक्तिभयादिभिः।**
**चतुरोपायसंपन्ना विचित्रवचना यथा॥ ६॥**

गङ्गाशेषमधुव्रताब्जधनुषां पङ्केरुहस्य श्रियं
वेणीपोतककीरकोकिलकपोताधीशकोकार्जितम् ।
हत्वा काञ्चनमेरुसिंहकरिणां लक्ष्मीं तथा तस्करि
त्वं गच्छ प्रभुकृष्णदेवनिकरं संयान्ति यावन्न ते ॥

(इति विचित्रवचना ।)

**मानविद्याच्छलेनेति गायन्ती तद्गुणश्रियम् ।**
**तुलितौ विधिना साम्यं युवां गानवती यथा ॥ ७ ॥**

संसाराम्बुनिधौ तदेतदजनि स्त्रीपुंसरत्नद्वयं
नारीणां भवती नृणां पुनरसौ सौभाग्यसीमा हरिः ।
सा त्वं तस्य कुरङ्गशावनयने योग्यासि लक्ष्मीपते-
रेतत्ते कथितं किमन्यदधुना यास्याम्यहं श्वस्तने ॥

(इति गानवती ।)

**धनाभिलाषिणी मिथ्या पुत्रीति च्छलभाषिणी ।**
**गुप्तशिक्षी विशेषज्ञा धात्री धूर्ताधिका यथा ॥ ८ ॥**

पुत्रि त्वत्पतिरद्य चत्वरतटे दृष्टो मया कूर्चवा-
न्संतालाङ्गपलाण्डुपङ्कजकरः प्रायः पयोष्णीपशुः ।
त्वं सौन्दर्यतरङ्गिणी च युवयोर्योगावयोगो वरं
कामोऽन्योऽस्ति समर्पयामि सुभगे तस्मै चल त्वामहम् ॥

(इति धात्री ।)

**कुमारी शुकवच्छिक्षावाक्यमन्योन्यसूचिका ।**
**क्रीडापुत्तलिका लोभाद्द्राक्षेक्षुफलतो यथा ॥ ९ ॥**

दत्तेयं कमनीयपुत्तलितरा येन त्वया पश्य मे
रे रे सुन्दरि सोऽपि तिष्ठति बहिस्त्वत्सौख्यमापृच्छति ।
त्वं द्राक्षास्तबकं गृहाण सुमुखि त्वित्युत्तरं दीयतां
मद्गेहाङ्गणपृष्ठकण्टकितरोर्मूलेऽतिकष्टं निशि ॥

(इति कुमारिका ।)

**प्रसङ्गाद्येन केनापि पत्री वचनचातुरी ।**
**प्रेक्षता सा तदा प्रोक्ता तज्ज्ञैः प्रासङ्गिनी यथा ॥ १० ॥**

भो वृद्ध क च गच्छसि प्रभुवर श्रीगोकुले नूतने
तत्र त्वं मम पत्रिका प्रियतरं संदेशमाश्रावय ।
यस्याः पङ्कजकुड्मलस्तनयुगं चन्द्राननं सस्मितं
नेत्रापाङ्गवहिर्गतश्रुतितटं द्वारे कदम्बद्रुमः ॥

(इति प्रासङ्गिनी ।)

**पुष्पशिल्पातिचातुर्यराजमालाधिपस्तव ।**
**कण्ठयोग्य इति श्लेषं गदन्ती मालिनी यथा ॥ ११ ॥**

कण्ठालम्बितचम्पको बकुलवद्यूथीभुजः पृष्ठभा-
ग्मल्लीपाण्डरबन्धकुन्दरचनावर्णस्वनामाङ्किता ।
सेवन्ती कजपारिजातकगुलालोरस्थलामण्डितः
सोऽयं पुष्पसुशिल्पकश्च किमये ज्ञातस्त्वया वल्लभः ॥

(इति मालिनी ।)

**भ्रष्टसंधानिका पश्चादुपालम्भनतत्परा ।**
**अथवा स्थीयते तूष्णीं सा दूती स्खलिता यथा ॥ १२**

हे मुग्धे प्रिय मा व्रज, त्यज रुषं, वर्षानिशा वर्तते,
हा कष्टं कलकण्ठचातकगणा गर्जन्ति रोलम्बकाः ।
तत्काले स्वयमागतः प्रियतमो द्वारान्तरात्तद्गृहं
सा दूती स्खलिता तदोषसि महोपालम्भमालम्भते ॥

(इति स्खलिता ।)

**यदा कदा समायाता सूचयन्ती मुहुर्मुहुः ।**
**स्वगृहे गुप्तसंकेतं प्रतिवेशिनिका यथा ॥ १३ ॥**

रे रे काञ्चनकञ्जकुड्मलकुचे फुल्लारविन्दानने
रक्ताम्भोजदलाभपाणिचरणे नीलोत्पलालोचने ।

नो जानासि तवाङ्गसङ्गिचरितं ज्ञातुं यदिच्छास्ति चे-
त्सायं क्लेशमुपाय्य भर्तृसदनादागच्छ होऽसद्गृहम् ॥
(इति प्रतिवेशिनी ।)

**तत्तद्वदनचातुर्यभावं दर्शनमात्रतः ।**
**जानाति परचित्तस्य विशेषज्ञा तदा यथा ॥ १४ ॥**

नाथेनाधरखण्डनं निशि कृतं ज्ञातुं न शक्ता मुदा
प्रातर्यातृषु मध्यगातिचतुरा भिक्षोः शिशोर्भावनम् ।
ज्ञात्वा सान्तरलज्जितातिसहसा गच्छेति मुक्ताकणां-
स्तस्मै चार्पति कण्ठलग्नसगुणान्सा ते कथं यास्यति ॥
(इति परचित्तविशेषज्ञा ।)

**फलपुष्पादिसंकेतं कथंचिदपि यत्कृतम् ।**
**तज्जानाति च या चेष्टासंकेतकोविदा यथा ॥ १५ ॥**

कर्पूरं सितपर्णचूर्णसहितं सुश्वेतपूगीफलं
क्षिप्त्वा कञ्जकरण्डके स्मितहरिर्दूतीकरे न्यस्तवान् ।
सा लक्ष्मीं समुपेक्ष्य सस्मितमुखी तस्याः पुरं स्थापय-
न्पद्मान्तःस्मितपूर्वकं मृगमदं दत्त्वा पुनः प्रेषिता ॥
(इति चेष्टासंकेतकोविदा ।)

**वदन्ती मधुरं मन्दं वसनादानदानतः ।**
**नृरत्नमद्य दृष्टं मे त्वद्योग्यो रजकी यथा ॥ १६ ॥**

रे रे रे रजकि त्वयाद्य वसनं धौतं न किंचित्कथं
सत्यं स्वामिनि कारणं शृणु तथा वक्तुं न शक्तास्म्यहम् ।
यं दृष्ट्वा प्रमदा भवन्ति विमदाः सोऽस्मिन्पुरे वर्तते
त्वद्योग्यः कियती त्वहं युवतयः सर्वाश्च तन्मोहिताः ॥
(इति रजकी ।)

**........................................................ ।**
**..........................................................सौचिकी यथा ॥ १७ ॥**

..........................................................

........................................................... ।

..........................................................

........................................................... ॥

(इति सौचिकी ।)

**अन्योक्तिकैतवं वाक्यं संकेतमुभयोर्मुहुः ।**
**जल्पन्ती बहुवेषज्ञा वेषधारिणिका यथा ॥ १८ ॥**

वेषः कस्य धृतस्त्वयाद्य सुभगे जन्मान्तरं त्वत्पते-
स्त्वं जानासि कथं पुरातनगतिं जातिस्मरत्वं मम ।
कुत्रास्ते स वद प्रयोगचतुरे त्वद्द्वारदेशेऽस्त्यसौ
न ज्ञातः सहसा त्वयेति वचनादश्रूणि सा मुञ्चति ॥

(इति वेषधारिणी ।)

**सुकाचवलयान्नारी करमूले प्रयोजिका ।**
**तदा वदत्यन्यगुणं मणिहारिणिका यथा ॥ १९ ॥**

एकस्मिन्नगरे वरो नरपतिः कामः कलाकालवि-
न्नारी तस्य कुरूपिणी विधिवशाद्भ्रमा त्वरन्मूर्धनि ।
त्वं सौन्दर्यरतिः कदा च युवयोर्योगोऽस्ति चेत्संमतं
धात्रा किं न पुरा स्मृतं सखि वद प्रायः पुराणो विधिः ॥

(इति मणिहारिणी ।)

**तत्तद्गुणकथावाक्यभेदस्यान्योन्यसूचनात् ।**
**उभयोः कथयन्तीति छद्मना कथिनी यथा ॥ २० ॥**

त्वं काहं कथिकास्मि मद्गतकथां जानासि जानामि ते
पूर्वं दुर्मदनामकः पतिरभूत्तस्याङ्गना दुर्मतिः ।
स्वेच्छाक्रीडनतत्परौ विधिवशान्नाशं गतौ तत्पुन-
र्जातौ संप्रति दुर्मदेन च बहिस्त्वं स्मर्यते दुर्मतिः ॥

(इति कथिनी ।)

**नखोत्तारणतो लाक्षारङ्गतः पादरञ्जने ।**
**नापिकी तत्कथां श्रुत्वा जल्पत्यन्यकथां यथा ॥ २१ ॥**

भो भोः पद्मिनि तेऽद्य वक्त्रकमलं म्लानं कथं वर्तते
दुःखं ते कथयामि किं मम सदा रात्रिंचरो वल्लभः ।
हा हात्रास्ति सुबालभास्करसमस्त्वत्प्रेमयोग्यो वरो
यं दृष्ट्वा तव सुप्रसन्नवदनं तत्कालमाफुल्लति ॥

(इति नापिकी ।)

नरपतिचुरहानः फारुकीतीजसूनुः
कविमतिनलिनीनां भासते बालभानुः ।
कविवर कुरु दूतीकर्मवर्मप्रकाशं
त्विति गदति कृतं तत्पण्डरीविट्ठलेन ॥

---

**नायकानां सहायोऽत्र चतुर्धापि प्रसङ्गतः ।**
**पीठमर्दो विटश्चेटविदूषकाविति क्रमात् ॥ १ ॥**
**त एव नर्मसचिवा दूतकर्मविचक्षणाः ।**
**किं त्वन्तरपटाद्बाह्ये न प्रत्यक्षेऽपि बोधकाः ॥ २ ॥**
**देशकालकलाभाषा माधुर्यं च विदग्धता ।**
**प्रोत्साहने कुशलता यथोक्तकथनं तथा ।**
**निगूढमन्त्रतेत्याद्याः सहायानां गुणा मताः ॥ ३ ॥**

---

**पीठमर्दो महाविद्वान्कुपितस्त्रीप्रसादकृत् ।**

कोऽयं कोपविधिः प्रयच्छ करुणागर्भं वचो जायतां
पीयूषद्रवदीर्घिकापरिमलैरामोदिनी मेदिनी ।
आस्तां वा स्पृहयालुलोचनमिदं व्यावर्तयन्ती मुहु-
र्यस्मै कुप्यसि तस्य सुन्दरि तपोवृन्दाय वन्दामहे ॥

(इति पीठमर्दः ।)

**कामतन्त्रकलावेदी भवेद्विटवरो यथा ॥ ४ ॥**

आयातः कुमुदेश्वरो विजयते सर्वेश्वरो मारुतो
भृङ्गः स्फूर्जति भैरवो न निकटं प्राणेश्वरो मुञ्चति ।
एते सिद्धरसाः प्रसूनविशिखो वैद्योऽनवद्योत्सवो
मानव्याधिरसौ कृशोदरि कथं त्वच्चेतसि स्थास्यति ॥

(इति विटः ।)

**संधानप्रचुरश्चेटः कलहंसादिको यथा ।**

सा चन्द्रसुन्दरमुखी स च नन्दसूनु-
र्दैवान्निकुञ्जभवनं समुपाजगाम ।
अत्रान्तरे सहचरस्तरुणौ कठोरे
पानीयपानकपटेन सरः प्रतस्थे ॥

(इति चेटः ।)

**विदूषको हास्यकारी विकृताङ्गादिभिर्यथा ॥ ५ ॥**

आनीय नीरजमुखीं शयनोपकण्ठ-
मुत्कण्ठितोऽसि कुचकञ्चुकिमोचनाय ।
अत्रान्तरे मुहुरकारि विदूषकेण
प्रातस्तनस्तरुणकुक्कुटकण्ठनादः ॥

(इति विदूषकः ।)

कचचिबुककुचाग्रे पाणिषु व्यापृतेषु
प्रथमजलधिपुत्रीसंगमेऽनङ्गभूमौ ।
ग्रथितनिविडनीविग्रन्थिनिर्मुक्तिहेतो-
श्चतुरतरविलासः शार्ङ्गिणो वः पुनातु ॥

इति श्रीकार्णाटकजातीयदूतीकर्मप्रकाशः ।

---

## श्रीधनदराजकविविरचितं शतकत्रयम्[1] ।

### शृङ्गारधनदाभिधानं प्रथमं शतकम् ।

सिद्धार्था कनकाक्षरेण कलिता यस्य प्रशस्तिः स्वयं
देवी शैलसुता महेशरजतप्रस्फारपट्टेऽभवत् ।
लक्ष्मीर्वा मुरवैरितन्मरकतप्रासादवक्षःस्थिरा
दाम्पत्यं रतिकामयोस्तदवतादानन्दजीवास्पदम् ॥ १ ॥
मेरुर्मानितया धनैर्धनपतिर्वाचा च वाचस्पति-
र्भोगेनापि पुरंदरः शुचितया दानेन चिन्तामणिः ।
गाम्भीर्येण महोदधिः करुणया कोऽपीह तीर्थंकरः
श्रीमालो **धनदः** कृती वितनुते शृङ्गारपूर्वं शतम् ॥ २ ॥
जात्या दोषपराङ्मुखाः परगुणप्रीत्या कृतिं सज्जनाः
पश्यन्तु प्रतिवासरं निजधिया संपादयन्तो रसान् ।
यज्जानन्ति वदन्तु तत्खलु खला नाभ्यर्थना तेषु य-
द्भूकैस्तावदनादृते दिनमणौ प्राप्तोऽर्थलाभः कियान् ॥ ३ ॥
आरब्धा शतकत्रयी पृथगिह प्रायः स्थितिर्मादृशां
शान्ते वर्त्मनि कर्मणां नयविदां तोषो भवेज्जातुचित् ।
शृङ्गारः प्रथमं तथा रसवतां हेतुः प्रवृत्तौ यतो
बालानां कटुकौषधप्रणयने देयः पुरस्ताद्गुडः ॥ ४ ॥
माधुर्यं स्मितमीक्षितं चपलता यूनोः कथासंभ्रमो
व्याजेन श्रुतिमुक्तिमालिवचने स्वाभाविको वक्रिमा ।
आलस्यं गतिचातुरीं मनसिजो रत्या समं खेलनीं
बालायाः करतालिकामुपगतं सख्योरिदानीं मनः ॥ ५ ॥

---

१. इदं शतकत्रयमनेन कविवरेण वैक्रमे १४९० (A. D. 1434) संवत्सरे प्रण्यनायीति 'वर्षे व्योमाङ्कवेदक्षितिपरिकलिते विक्रमाम्भोजवन्धोः' इति द्वितीयशतकसमाप्तिपद्यतोऽववुध्यते. पुस्तकं चास्य ग्रन्थस्यास्माभिरेकमेव २७ पत्रात्मकमस्माकं सरस्वतीसदनत उपलब्धम्.

वक्षो वीक्षितमादरेण सहसा स्पृष्टो वलिप्रक्रम-
श्वेतश्चिन्तितमुत्सुकं जघनयोरापीनता तर्किता ।
तन्व्या लोचनलोलतापि कलिता प्राप्तेऽचिराद्यौवने
मुक्तोरःस्थलमावृतं सुवदनाकण्ठे स्थितं लज्जया ॥ ६ ॥
कन्दर्पश्चरतिश्च कुङ्कुममृदालेपेन मूषाद्वयं
कुर्वाते रससाधनाय विधिवत्कस्तूरिका मुद्रया ।
अन्तर्दर्पकबाणतापितयुवप्रेमोष्मभूयस्तया
निर्याता रसबिन्दवो बहिरितो हारस्य मुक्ताच्छलात् ॥ ७ ॥
सेकं सेकमुरोजहेमकलशीयुग्मेन नाभीह्रदा-
ल्लावण्यामृतवारिणापुषदियं शृङ्गारवल्ली हृदि ।
उन्मीलन्स्मितसूनसौरभभरः श्वासानिलस्तोषकृ-
द्वक्त्रेन्दूदयलालितोदरचरीच्छायेह रोमावलिः ॥ ८ ॥
धन्यं कुण्डलमेतदुत्तमवधूगल्लस्थलीचुम्बनं
शश्वल्लभते परं स गुणवान्हारः स्तनाश्लेषकः ।
अस्माकं तु खलेन केन विधिना स्थाने स्थितिर्निर्मिता
हन्तेत्थं रटतीव खेलदबलापादे रणन्नूपुरः ॥ ९ ॥
दीर्घाभ्यर्थनया कथं कथमपि न्यस्तं पुरो वीक्षसे
जानीषे न किलालसा न वृणुषे स्रस्तं दुकूलाञ्चलम् ।
यावद्व्यञ्जयति स्थितो हृदि निजं नायं कपोले यश-
स्तावत्तन्वि विधीयतां प्रतिकृतिस्तादृक्स्वयं दुर्लभः ॥ १० ॥
छत्रं वक्त्रसुधानिधिर्ध्वजविधौ मत्स्यौ चलच्चक्षुषी
लावण्यामृतनिर्झरा तनुरियं पीना नितम्बस्थली ।
रै(?)सिंहासनमुन्नतं कुचयुगं कुम्भौ करौ पल्लवौ
सानन्दा जलहारिणी रतिरहो कामाभिषेकोऽधुना ॥ ११ ॥
साध्वी गायति किङ्किणी स्तुतिपटुर्वैतालिको हंसको
वाणाः पञ्च विलोचने स्मितमिदं दन्तच्छदो नासिका ।

चापो भ्रूरिति पञ्चबाणसमयो यस्यामिदानीमहो
सा त्वं वक्षि न जातु किं सुवदने चेतोऽनुरागास्पदम् ॥ १२ ॥
तल्पे पल्लवकल्पिते सुनयना शेते निधायोपरि
स्वच्छन्दं करपल्लवं स्तनयुगस्यारामरम्योदरे ।
लक्ष्मीं वीक्षितुमागतस्य सुहृदः कामाभिषेकोत्सवे
रक्ताशोकनवप्रवालकलितं हैमं नु कुम्भद्वयम् ॥ १३ ॥
अद्याश्लिष्य निपीय गाढमधरं नीत्वा च वक्षःस्थलीं
प्रक्ष्यामि स्मितपूर्वकं प्रतिदिनं माऽसौ यथा पृच्छति ।
निर्धार्येति दिने न चेतसि निशि प्राप्ता गृहं प्रेयसो
बाला न क्षरमुत्तरं वितनुते पृष्टा प्रियेणादरात् ॥ १४ ॥
कान्तो नर्मणि नैपुणेन विदितस्त्वं शैशवद्वेषिणी
क्रीडाशैलशिरोमणिर्गृहमिदं रम्यो वसन्तोत्सवः ।
सख्यः कामकथोपचारचतुराः संभोगकालेऽधुना
मानो वा कलहोऽथवा यदि कदा तच्चेतसो निर्वृतिः ॥ १५ ॥
जन्मारभ्य न यावदद्य सुभगंमन्याक्रमो हापितः
स्वैरं तिष्ठतु कान्तया स रमतां मा मां नयध्वं बलात् ।
इत्थं जल्पति यावदेव सुमुखी तावत्क्षणादागतः
कान्तस्तल्पमलंचकार च वदन्कस्येदृशी संगतिः ॥ १६ ॥
अज्ञास्ते सुहृदालयोऽतिपिशुनास्त्वं कर्णयोर्दुर्बला
दृष्टे सागसि वल्लभे मृगदृशां मानः स्वयं जायते ।
लोको हासरसाकुलः परगृहे प्रेमोपभेदोद्यतो
ह्याखुर्दन्तमुखेन खण्डयति सत्यद्धाम्बरं हेलया ॥ १७ ॥
पृष्टः कातरतां विहाय शयने मानापराधौ कदा
जायेतामिदमुत्तरं कथितवान्स्मित्वा चिरं चिन्तय ।
बाले संप्रति नैतयोस्तु समयः श्रुत्वेति हासच्छला-
दालीभिः समकालमेव समयं दृष्टा चिरात्तर्जनी ॥ १८ ॥

स्निग्धे तादृशि नौचिती परुषता दृष्टेऽवहित्था कथं
धीरं सस्मितमालपत्यनुदिनं निर्हास्यमास्यं कुतः ।
निद्राणं तनुरोम तिष्ठति पुरा तत्संनिधावादरा-
त्सख्यो मानमुदाहरन्तु कलहे बालोद्यमः कीदृशः ॥ १९ ॥
धैर्यं मुञ्च कुरुष्व मानममलं तद्गौरवस्यास्पदं
मानादेव गुणोदयः किमधिकं दासायते वल्लभः ।
उक्ते धेहि मनो निशम्य सकलं तूक्ता वयस्यास्तथा
दत्तं नाम मनोऽन्यतो न विदितं दत्तं कथं दीयते ॥ २० ॥
यामः पूर्वनिशोपभोगकथया नीतोऽपरो निद्रया
नीतः कोऽपि वयस्यया सह रताम्नायोपदेशक्षणात् ।
स्नानाकल्पविकल्पकल्पनविधेरन्यो दिनस्य क्षणा-
त्तल्पे वासकसज्जया युगसमो यामो निशायाः कृतः ॥ २१ ।
आकल्पं विरचय्य तल्पममलं सज्जं विधायादरा-
दालीभिः कथया कयापि समयं वारान्बहून्पृच्छती ।
द्वारे निश्चललोचना परपदध्वाने तमेवागतं
मन्वाना निजमन्दिरे रसवशाद्धन्यस्य बाला वसेत् ॥ २२ ॥
गच्छ त्वं सखि वाचिकं लघुपदं नीत्वा नयैनं शठं
कुत्रास्ते नु वदन्निजेन सुहृदा केनापि तत्तद्वचः ।
गच्छामो यदि लाघवं ननु परा हासाय दीर्घाननाः
का वा गौरवलाघवादिकलना वश्ये तथा वल्लभे ॥ २३ ॥
आकल्पो मलिनो भविष्यति मनाग्भूयोऽधुना धीयते
भुक्तं तल्पमथोज्झितं च सहसा सख्यः परिस्तीर्यताम् ।
संकल्पेन विधाय संगमसुखं जातावबोधा पुन-
र्धन्यो वासकसज्जया प्रतिपदं प्राणाधिकं स्मर्यते ॥ २४ ॥
पत्राली चिरलालिता करतलस्पर्शे कपोलाद्गता
लुप्तो रागपरिग्रहोऽधरतले तद्वाचिकालापतः ।

लीलातामरसं मलीमसमभूदुच्छ्वासतोऽधः पत-
त्संकेतालयतल्पकल्पनपरा तेऽध्वानमन्विष्यति ॥ २५ ॥

मानश्चेतसि नाथ वासकलहो नालिङ्गने मेति न
स्वैराभाषणमौनिता न शयने वैमुख्यबुद्धिश्च न ।
सीत्कारोऽधरखण्डने न सुरते मुग्धाक्रमो नेति ना
पुंभावं गतया हठादभिहितः स्त्रीत्वं गतः पुण्यवान् ॥ २६ ॥

धूपेनागुरुजन्मनाथ सुमनोमालाभिरत्यादरा-
द्दीपं दैवतमामनन्ति सुदृशामानर्च पत्युः पुरः ।
ज्ञानोन्मेषदृढप्रकाश भवतः कुर्वे प्रणामाञ्जलिं
सद्यः कज्जल(?)मुद्गमायमधुना कान्तो रतायोत्सुकः ॥ २७ ॥

मानेनासि सखि क्षमा शिशुरयं न प्राणनाथोऽपि ते
नास्माभिः सखि वञ्चितासि कतमस्ते खण्डिताया भ्रमः ।
भुक्तासीति न कथ्यते कथय तत्का नाम ते चातुरी
पत्राली न मलीमसा न मलिनो जातोऽङ्गरागः क्वचित् ॥ २८॥

युष्मासु स्वयमुत्थितासु शयने लुप्ते चिरान्मण्डने
मा लज्जस्व नवं लिखाम दयितो मां याचते स्मासकृत् ।
भावैरष्टविभागतोऽनु रचनाः प्रत्यूहमासादिताः
प्राप्तेयं नवमी कथं कथमपि प्रातस्ततोऽभूदहः ॥ २९ ॥

स्वादङ्गादवतार्य नूपुरयुगं न्यस्तं सखीपादयो-
र्मध्ये दीर्घनिनादिनी मणिमयी बद्धा दृढं मेखला ।
ज्योतिःपूरमुरःस्थले कृतनवं हारं प्रियप्राप्तये
मुग्धा गच्छति मन्दमन्दमुदितत्रासा जनावेक्षणात् ॥ ३० ॥

तल्पे जल्पितमल्पमेव तदनु व्याख्यातमन्तर्गृहे
पारेद्वारमुदाहृतं प्रतिपदं व्यावृत्तमाराद्बहिः ।
सीमान्ते प्रतिदृष्टमध्वनि हठादाशङ्कितं प्रौढया
कान्तोत्सङ्गतले तयाखिलमलं तत्संहृतं वाचिकम् ॥ ३१ ॥

वैमुख्येन शयानयान्यरमणीनाम्ना समाहूतया
नाश्रावीति निमीलितं प्रलपितं मिथ्येति निद्राहृता।
उद्यद्वेपथुना द्वयोर्यदचलत्तल्पं तदाभ्यां छला-
त्रस्यद्भ्यां च परस्परेण कलितं नीरन्ध्रमालिङ्गनम्॥ ३२॥

वारं वारमुदाजहार रमणी दृष्टान्तमेकान्ततो
दम्पत्योः कलहोपहाससमये कश्चित्सखीनां पुरः।
रुष्टा तेन मनस्विनी नु सुभगंमन्यः प्रियो नाधुना
चित्ते मानमवीवसत्किमधिकं जात्यैव वामाः स्त्रियः॥ ३३॥

उच्यन्ते नु विशेषका न रमणीवक्त्रे विशेषः क्वचि-
त्तेभ्यस्ते खलु वेधसा विरहिणोः सृष्टोऽन्तरायः क्षणम्।
सायं सायमनीदृशं यदपरं तत्प्रातरालोक्यते
जाड्योन्मुक्तनिशीथपार्वणविधुध्वंसाय मीमांसयत्(?)॥ ३४॥

निर्व्यूहः सुखमावयोर्मधुरयं न स्यात्तपर्तुस्तथा
संतापाय वियोगिनोरिति मुहुः श्रुत्वा पिपासोर्वचः।
बाला पृच्छति सस्मितं न मुकुलं स्यान्मल्लिकायां कथं
निर्गन्धा वनपाटला कथमसौ तन्नाथ मे कथ्यताम्॥ ३५॥

प्रावृष्येष्यसि वासरास्तु बहवो मध्ये तपो दुःसहः
वातारो नवमल्लिकासुरभयो यत्रापरे मारुताः।
धारामन्दिरमार्द्रतल्परचना चन्द्रातपश्चन्दनं
यत्स्पर्शेन विषायतेऽखिलमिदं प्रायो वियोगक्षणे॥ ३६॥

यास्यामीति न यावदीरितमनुप्राप्ते कथागौरवे
तावन्नर्मणि न स्खलत्प्रतिवचा वासः स्खलद्भ्रश्यति।
चिन्ताश्वासनिपीतपीतिमतनुस्तावद्भभीराशया
नासामौक्तिकमात्रभूषणमणिर्दृष्टा मया प्रेयसी॥ ३७॥

मा काकं दधिभक्तमाशय मुहुस्तिर्यत्करः किं वदे-
दस्य ज्ञानविबोधनाय विधिना सृष्टो धरायां पिकः।

कण्ठे चेद्दधि कोकिलस्य कुरुते तत्कण्ठकुण्ठस्तदा
नोच्चैः पञ्चममातनोति सुदती जीवेत्कथंचित्तदा ॥ ३८ ॥
प्रालेयाचलनिम्नगाभिरभितो मार्गे निरुद्धेऽधुना
प्रावृष्येति न यक्षराजककुभस्तन्वी कथं जीवति ।
इत्यालापपरम्परां श्रुतवती त्वासां सखीनां मिथो
बाला पृच्छति साधु रावणपुरीद्वारध्वनो वासरान् ॥ ३९ ॥
आकर्णाञ्चितधन्वनः करिवरव्यापादनायोद्यता-
न्विन्ध्यालेख्यमहाटवीषु मृगयोत्साहे सखीनां पतीन् ।
कोदण्डाञ्चलबद्धनिर्मदशिखिप्रस्फारपिच्छध्वजं
प्राप्तं स्वं पतिमालिलेख सुदती गर्वाज्जहासोच्चकैः ॥ ४० ॥
यस्मात्पीनपयोधरद्वयमिदं कृत्वोपधानं सुखं
स्नातौ दर्पकदम्पती मृदुतनावस्यां शयाते चिरात् ।
किंचिच्छ्यामलमग्रतस्तदुभयं पाण्डुस्वभावादहो
धम्मिल्लाङ्कनिमग्नतैलशबलच्छायां ततो लक्ष्यते ॥ ४१ ॥
मञ्जीरद्वयमेतदङ्गदयुगं ग्रैवेयकं कुण्डले
सप्तैतानि विलोकय प्रभुरसि स्वैरं सपत्न्याः पुरः ।
किं ब्रूमः पतिदेवता वयमिति व्याहृत्य पत्युर्ददौ
सीमन्ताचलपद्मरागशकलं बाला बलादञ्जलौ ॥ ४२ ॥
लीलातामरसं विपक्षरमणीहस्ते निरीक्ष्यादरा-
दावेशादुपविश्य सामि सहसोड्डीनैरलीनां गणैः ।
गुञ्जत्सौरभलम्पटालिपटलीश्यामं तदेवात्मनो
मा दृष्टेति ललज्ज कापि रमणी तत्याज दूरेऽम्बुजम् ॥ ४३ ॥
प्रेयस्ताडनकर्मणीदमुचितं निर्वापकं तेजसो
लज्जानर्मणि लोचनाञ्जनरुचः सौभाग्यसंपादकम् ।
प्राप्ते प्रेयसि मन्दिरं तदपरं लीलारविन्दं पुनः
शय्योत्थायमपाचकार रमणी सौधाद्बहिः सत्वरम् ॥ ४४ ॥

क्रीडासद्मनि कापि कौतुकवती क्षीरोदपूरोदरे
निद्राणं हरिमालिलेख निखिलप्रारम्भमुद्रागुरुम् ।
पूर्वं दक्षिणमीक्षणं भगवतो ध्यात्वा हसन्ती क्षणं
पश्चाद्वाममलीलिखत्किमु निशा यस्यां न गाढं तमः ॥ ४५ ॥
मात्रा चित्रविशेषलेखनविधावादिष्टपूर्वा चिरं
विष्णोर्जागरणोत्सवाय सुदती रेखामधादग्रतः ।
कैलासाचलगामिमानससरः स्वच्छं लिखेत्यादृता
क्रीडाशैलसरश्चकार विकसज्जाम्बूनदाम्भोरुहम् ॥ ४६ ॥
नष्टे तेजसि बान्धवे विधिवशाद्यावापृथिव्यौ मिथो
कुर्वाते सलिलाञ्जलिं मरुदसावद्यापि नोत्तिष्ठते ।
आक्रान्तेन महौजसा च वियता क्षिप्तं यदन्धं तमः
प्रातः पीतमनिच्छया तदधुना विष्वग्वसेन्मेदिनी ॥ ४७ ॥
वारुण्याञ्चलवायुनोपशमिते भास्वत्प्रदीपेऽधुना
किं चिन्वन्ति नवाञ्जनं सममिदं श्रृङ्गारमाधित्सवः ।
किं वा सन्निभिरादृतेषु पतिषु व्योमैकगेहोदरे
सद्यः संप्रति शेरते दश दिशः सत्यं सुखं यातरः ॥ ४८ ॥
मुग्धे मामिसर स्वमन्दिरमलं कुर्वानय प्रायशः
प्रेयांसं तव साहसं न घटते तथ्यं हितं ब्रूमहे ।
सद्यस्त्वन्मुखचन्द्रिकाभिरभितो लीढेऽन्धकारेऽधुना-
प्यन्यासामभिसारसाहसरसे जातोऽन्तरायोऽधुना ॥ ४९ ॥
मञ्जीरं त्यज मुञ्च मौक्तिकसरं मा मल्लिकाः शीलय
नीलं वा परिधत्स्व चारु वसनं वाचं नियच्छादरात् ।
मन्ये स्यादभिसारिका न भवती दूरे ध्वनिं प्रायश-
स्त्वच्छ्वासानिलविप्रलब्धमधुना प्रातः समुज्जृम्भते ॥ ५० ॥
उड्डीना त्रपया त्वया ननु जिता गत्या निमग्नाः कदा
तल्पाय प्रतिवासरं कृशतनो लग्नाः सखीभिस्तव ।

दृश्यन्ते कलुषा निशा मुखपतत्कान्ताङ्गरागादिति
त्वत्कान्तानुचरीषु वञ्चनकथापाण्डित्यमभ्यागतम् ॥ ५१ ॥
लुप्तश्चन्दनबिन्दुरञ्जनरसः पीतोऽनुलेखो गतो
निःशेषेण कपोलयोः कुचयुगे शेषो मकर्याः कुतः ।
दग्धेयं सखि मध्यभागतनुता पङ्कजभीरुः प्रियो
गाढाश्लेषपराङ्मुखो रतविधौ तुष्टः कदाचिद्यदि ॥ ५२ ॥
सौधस्योरसि मन्मथप्रतिकृतिः प्रासादपृष्ठे शशी
क्रीडाकाननवेदिकासु च पिकस्तद्दीर्घिकायां मरुत् ।
इत्थं त्वद्विरहेऽधुना कृशतनोः शय्यासमासादन-
व्यग्राणामितरेतरं मधुमुखे तस्याः सखीनां मिथः ॥ ५३ ॥
आगच्छेति मया श्रुतं जिगमिषोर्यामीति तूष्णीं मतं
पाथेयं निजपाणिना विरचितं पृष्टोऽवधिः सस्मितम् ।
प्राणा येन तदा तदा किल गता वक्षो न दीर्णं च य-
त्तेषां तस्य च का कथा यमधुना दम्भाय कार्यो विधिः ॥ ५४ ॥
।किं निन्दन्ति सुधानिधिं मलयजं किं नाद्रियन्तेऽथ किं
श्रीखण्डानिलमावृणन्ति सहजामुज्झन्ति किं धीरताम् ।
किं कामं विलपन्ति किं पिकरुतात्त्रस्यन्ति मूर्च्छन्ति किं
तल्पे पल्लवकल्पितेऽपि सुदृशस्तद्ब्रूत किं कारणम् ॥ ५५ ॥
बाल्यादद्य विनिर्गतं तव वयः कान्तः स्वयं दक्षिणो
वृद्धाधीतबहुच्छला वयमिमा वां कामजीवातवः ।
क्रीडाकाननसौधशैलशिखरे श्रीखण्डशैलानिल-
स्वाचान्तश्रमवारिबिन्दुरधिकप्रेम्णा मधुर्नीयताम् ॥ ५६ ॥
सा पत्युः शयनं गतेति मुदिता श्रुत्वा सखीभाषितं
पश्यामः प्रियसद्म विद्म न वयं कीदृक्षमन्तर्भवेत् ।
लाक्षालक्ष्मसुलक्षपादयुगलं तल्पं दृशा चिन्वती
चित्रस्थे च निरीक्षिता सहचरीवृन्देन मन्दाक्षतः ॥ ५७ ॥

मुग्धे बोधय सारिकामियमदः प्रेमास्पदं सीदति
प्रीत्या पाठय चाटु पाठकबटुं वां पीठमर्दं शुकम्।
आलीर्हासरसोचिताः स्मितलवेनाभाषयेथा इमा
दृष्टेनानुगृहाण वल्लभमिमं पादानतं भीतवत्॥ ५८॥

तादृक्कण्टकलम्पटापि करभी मा हास्यतां दूरतो
नाङ्गाराशनगर्विता सुनयना निन्द्या चकोरी पुनः।
उद्यत्कण्ठकदन्तुरेऽतिकठिने पङ्काकुले पिच्छिले
निद्रामो यदि संयतास्तदपरं नानन्दकन्दास्पदम्॥ ५९॥

गुल्फग्रन्थिमणिप्रभावबलतः पादाङ्गदं प्रेयस-
श्चूडारत्नपदं मदात्समगमन्मानापनोदादरात्।
मागान्मन्नपदाददादपि पदं कार्याकुलोऽपि प्रियः
कर्णाशोकदनाहतश्चिरतरं मानं समूलं जहौ॥ ६०॥

कातर्यं तु न कार्मणं न न परं दम्भो न किं योषितां
यच्चित्ता तनुचापलं मधुविधुद्वेषस्तनुत्वं तनोः।
अस्माकं सखि पश्य संप्रति तनू रोमापि वक्रायते
सद्यः प्रोषितनाथयाभिनवया पान्थस्त्रियो हासिताः॥ ६१॥

द्वारे नूपुरमुच्चगोपुरमुखे काञ्ची रणत्कारिणी
हारो द्वारचतुःपथे पथि परे कर्णोत्पलं भृङ्गमत्।
प्रेयो मन्दिरमित्यवेत्य मुमुचे तन्व्या शिरोभूषणं
व्यालोके तु परस्परं विगलिता नीवी स्वयं बन्धनात्॥ ६२

पूर्वं यत्र विशेषकक्षितिरिति प्रायः कपोलस्थलीं
चक्षुः सिञ्चति जागरूकमसकृद्भूयोऽञ्जसा तद्भवेत्।
बाप्यक्षारतया तयाभवदियं पाण्डुश्चिरायोषरा
तन्मन्ये मकरीनिकेतनधिया तत्रैव सिन्धुः कृतः॥ ६३॥

हासः कोऽपि महाशुचिः स्थितिमतां प्रेयःसमक्षं क्षणा-
द्वारंवारमुपैति तस्य विरहे दृष्टः कदाचिन्न यः।

वाष्पः किं व्यभिचारिणां न गणितः प्रायः पुरस्तादयं
दीनाया निजवल्लभस्य विरहे यश्चक्षुषी चुम्बति ॥ ६४ ॥
साहाय्याय मलीमसाः समुचिताः प्रायश्चकोरीदृशा-
मुत्कानामभिसारसाहसरसे गाढोऽन्धकारः सुहृत् ।
धन्यं कज्जलमुज्ज्वलं जिगमिषोरग्रेऽगमल्लोचना-
त्संयम्य स्वयमात्मना सुमनसो नाजिघ्रतीदं कचः ॥ ६५ ॥
नापेक्षैव विभूषणस्य सहजा यस्यास्ति गम्भीरता-
त्सद्वृत्तं यदि पार्श्वतोऽपि सहजः कीदृग्वलिप्रक्रमः ।
मध्यस्थस्य च कोमलस्य विषये कुण्ठो भवेदायुधं
दृष्टान्तोऽत्र मनोभवेन कलितो नाभिः कुरङ्गीदृशः ॥ ६६ ॥
रोहिण्याधरसंपदा मुखविधोरिष्टाश्चतस्रः कला
वीजानीह निरूपितान्यतनुना हासद्रुमस्यादरात् ।
भारत्याः कठिनीलवा घटयितुं रीतीरुदाराक्षरा
राजन्ते सुतनोर्मनोरमतमास्ते राजदन्ताः पुरः ॥ ६७ ॥
सुप्ता कञ्चुकगह्वराञ्चलमुखे दत्त्वा नरं वीटिकां
प्राप्ते संप्रति तस्करेऽथ सहसा जातं कपाटे चटत् ।
रुद्धा वागथ निद्रया नयनयोरन्ते स्थितं लज्जया
क्लीबै रोमभिरुत्थितं पतिरिति ज्ञात्वा पुनर्मीलितम् ॥ ६८ ॥
सिद्धस्त्वं पुरुषोत्तमोऽसि विदिता सा सत्यभामा न किं
वाचा बोधयितुं सखीभिरधिकं नापारिजातग्रहः ।
व्याख्याता स शुकः परं गिरि पटुः संतापचिन्तातातिं
नूनं निर्जरदैवतप्रतिभटो भूत्वा समाश्वासय ॥ ६९ ॥
जानासि क्रममञ्जसा विरचय द्रागङ्गमङ्गं परि
प्रेयो मोहनमद्य मण्डनविधौ प्रौढा नियुज्यादरात् ।
तुष्टे याचकमादरेण ददती तन्व्या सखी वारिता
मुग्धे पूर्वमलंकुरुष्व कबरीमेतं ततो रञ्जय ॥ ७० ॥

मुग्धे बोधय सारिकामियमदः प्रेमास्पदं सीदति
प्रीत्या पाठय चाटु पाठकबटुं वां पीठमर्दं शुकम्।
आलीर्हासरसोचिताः स्मितलवेनाभाषयेथा इमा
दृष्टेनानुगृह्णाण वल्लभमिमं पादानतं भीतवत्॥ ५८॥

ादक्कण्टकलम्पटापि करभी मा हास्यतां दूरतो
नाङ्गाराशनगर्विता सुनयना निन्द्या चकोरी पुनः।
उद्यत्कण्ठकदन्तुरेऽतिकठिने पङ्काकुले पिच्छिले
निद्रामो यदि संयतास्तदपरं नानन्दकन्दास्पदम्॥ ५९॥

गुल्फग्रन्थिमणिप्रभावबलतः पादाङ्गदं प्रेयस-
श्चूडारत्नपदं मदात्समगमन्मानापनोदादरात्।
मागान्मन्त्रपदाददादपि पदं कार्याकुलोऽपि प्रियः
कर्णाशोकदनाहतश्चिरतरं मानं समूलं जहौ॥ ६०॥

कातर्यं तु न कार्मणं न न परं दम्भो न किं योषितां
यच्चित्ता तनुचापलं मधुविधुद्वेषस्तनुत्वं तनोः।
अस्माकं सखि पश्य संप्रति तनू रोमापि वक्रायते
सद्यः प्रोषितनाथयाभिनवया पान्थस्त्रियो हासिताः॥ ६१॥

द्वारे नूपुरमुच्चगोपुरमुखे काञ्ची रणत्कारिणी
हारो द्वारचतुःपथे पथि परे कर्णोत्पलं भृङ्गमत्।
प्रेयो मन्दिरमित्यवेत्य मुमुचे तन्व्या शिरोभूषणं
व्यालोके तु परस्परं विगलिता नीवी स्वयं वन्धनात्॥ ६२।

पूर्वं यत्र विशेषकक्षितिरिति प्रायः कपोलस्थलीं
चक्षुः सिञ्चति जागरूकमसकृद्भ्रूयोऽञ्जसा तद्भवेत्।
वाप्यक्षारतया तयाभवदियं पाण्डुश्चिरायोषरा
तन्मन्ये मकरीनिकेतनधिया तत्रैव सिन्धुः कृतः॥ ६३॥

हासः कोऽपि महाशुचिः स्थितिमतां प्रेयःसमक्षं क्षणा-
द्वारंवारमुपैति तस्य विरहे दृष्टः कदाचिन्न यः।

वाप्यः किं व्यभिचारिणां न गणितः प्रायः पुरस्तादयं
दीनाया निजवल्लभस्य विरहे यश्चक्षुषी चुम्बति ॥ ६४ ॥
साहाय्याय मलीमसाः समुचिताः प्रायश्चकोरीदृशा-
मुत्कानामभिसारसाहसरसे गाढोऽन्धकारः सुहृत् ।
धन्यं कज्जलमुज्ज्वलं जिगमिषोरग्रेऽगमल्लोचना-
त्संयम्य स्वयमात्मना सुमनसो नाजिघ्रतीदं कचः ॥ ६५ ॥
नापेक्षैव विभूषणस्य सहजा यस्यास्ति गम्भीरता-
त्सद्वृत्तं यदि पार्श्वतोऽपि सहजः कीदृग्वलिप्रक्रमः ।
मध्यस्थस्य च कोमलस्य विषये कुण्ठो भवेदायुधं
दृष्टान्तोऽत्र मनोभवेन कलितो नाभिः कुरङ्गीदृशः ॥ ६६ ॥
रोहिण्याधरसंपदा मुखविधोरिष्टाश्चतस्रः कला
बीजानीह निरूपितान्यतनुना हासद्रुमस्यादरात् ।
भारत्याः कठिनीलवा घटयितुं रीतीरुदाराक्षरा
राजन्ते सुतनोर्मनोरमतमास्ते राजदन्ताः पुरः ॥ ६७ ॥
सुप्ता कञ्चुकगह्वराञ्चलमुखे दत्त्वा नरं वीटिकां
प्राप्ते संप्रति तस्करेऽथ सहसा जातं कपाटे चटत् ।
रुद्धा वागथ निद्रया नयनयोरन्ते स्थितं लज्जया
क्लीबै रोमभिरुत्थितं पतिरिति ज्ञात्वा पुनर्मीलितम् ॥ ६८ ॥
सिद्धस्त्वं पुरुषोत्तमोऽसि विदिता सा सत्यभामा न किं
वाचा बोधयितुं सखीभिरधिकं नापारिजातग्रहः ।
व्याख्याता स शुकः परं गिरि पटुः संतापचिन्तातातिं
नूनं निर्जरदैवतप्रतिभटो भूत्वा समाश्वासय ॥ ६९ ॥
जानासि क्रममञ्जसा विरचय द्रागङ्गमङ्गं परि
प्रेयो मोहनमद्य मण्डनविधौ प्रौढा नियुज्यादरात् ।
तुष्टे याचकमादरेण ददती तन्व्या सखी वारिता
मुग्धे पूर्वमलंकुरुष्व कबरीमेतं ततो रञ्जय ॥ ७० ॥

नैनं वारय कामकर्मकुशयं(?) स्वच्छन्दतश्चुम्बना-
वस्त्राकर्षणकौतुकेन रमतां प्रत्यङ्गमालिङ्गतु ।
अन्योन्यं तनुतां नितान्तनखरव्यापारतो विग्रहं
कावेरीतटकाननेऽध्वनि पुरः कुब्जस्तरुस्तिष्ठति ॥ ७१ ॥

प्रातर्मन्दिरमात्मनो जिगमिषोः कान्तेन यन्मण्डनं
दूरं कल्पितमादरेण बहुना निर्जित्य कम्पादिकम् ।
बाह्वोर्मूलनखाङ्कलेपनविधौ जातः स कोऽपि क्रमो
येनैतावदशेषतोऽपि गलितं जाता तथैवोषसि ॥ ७२ ॥

नीचैर्निश्वसिहि स्फुरत्वनुदिशं चन्द्रातपः किं ततो
गच्छामस्तव वल्लभोऽयमधुना दूनः प्रसूनेषुणा ।
सख्ीमुञ्चिनु चन्दनं च कलय क्षौमं तनावातनु
स्वच्छं मौक्तिकहारमुल्ललय तत्स्वैरं प्रियं प्राप्नुहि ॥ ७३ ॥

राकायाः शरदः सुधावधिरभूद्यस्याननं रोहिणी
श्रीरेखाधरपल्लवस्य सुदती लावण्यवापी यदि ।
रोमालिर्जलनीलिका च चरणं पद्मे चलच्चक्षुषी
मीनद्वन्द्वमुपान्त एष मुखरो न स्याद्युवा हंसकः ॥ ७४ ॥

श्यामाया मुखमिन्दुमण्डलमिदं पाण्डुद्युतिप्रोषिते
दूरं भर्तरि वासरे मृगतया लम्बालकाग्रच्छविः ।
उच्चैरम्बरकेलिशैलशिखरादालोकते मेदिनी
पन्थानं विरहज्वरातुरतनुस्तद्वासरस्यादरात् ॥ ७५ ॥

रक्तं किंचिदुदेति वासवदिशि श्यामामुखं लोहितं
रोषेण प्रतिवासरं स भजते नाथो दिनं वारुणीम् ।
विख्यातो द्विजराजनामभिरयं मौलौ भवानीपते-
स्तिष्ठंस्तिकं न हि लज्जतेऽरुचि....तं म्लानिर्निजाङ्कच्छलात् ॥७६॥

शृङ्गाराद्वयवादिनो रतिपतेर्निःसा(?)णपात्रीमुखं
तन्मार्दङ्गिकपुंस्पिक(?)प्रतितनुच्छायान्तरुज्जृम्भते ।

किं वा वासवदिग्वधूकरतलादानेय दिग्वल्लभा
कान्तस्याध्वनि पत्य(?)पातमलिनस्तच्चन्द्रमःकन्दुकः ॥ ७७ ॥

नायातः सखि निर्दयं स समयः प्रायो गतो गम्यतां
नष्टं किं यदि नागतः सशपथं रुद्धः क्वचिद्बन्धुभिः ।
आयास्यत्यथ दुर्जनः परवधूगाढोपगूढाङ्कितः
प्रातर्दृष्टिमुपागतेन बटुना वक्षो विदारिष्यते ॥ ७८ ॥

मा गाः कान्त निशामुखे परगृहं मा गास्ततोऽहर्मुखे
वेश्मास्माकमिदं द्वयं वितनुते चायुःक्षतिर्योषिताम् ।
मा भूत्काञ्चनवञ्चितेति रमणी मा भूदहो खण्डिता
मुग्धा भावमपाचकार रमणीत्थं वारयन्ती पतिम् ॥ ७९ ॥

प्रेयः प्रेममहाधना स्मितलवोल्लासं रसे मज्जती
सृष्टा केन खलेन वा परवशा योषिद्वराकीयती(?) ।
मा भूत्काञ्चनवञ्चिता निशि निशि प्राणेश्वरेणाबला
पश्येयुर्न च खण्डिता मुखमपि प्रातर्वयस्याश्चिरम् ॥ ८० ॥

आयातेव निवारितः स्मितमुखो यातः समीपं बला-
दाबद्धो वलया हठेन सरुषा कर्णोत्पलेनाहतः ।
आविद्धो नखरायुधेन हृदये लाक्षारसेनाङ्कितः
कान्तः काममपि तृप्तिमापदुचितं कामस्य वामा गतिः ॥ ८१ ॥

मा मां कल्पय लम्पटेषु भवती मा भूः स्वयं खण्डिता
भूयोऽन्यत्र न जातु यास्यति निशा तुभ्यं शयेय स्फुटम् ।
कस्यास्तीह न मन्दिरे परिमलः कस्याङ्गरागो न वा
को नालिङ्गति बान्धवं त्यज वृथा तापं प्रसीदाधुना ॥ ८२ ॥

पादालक्तकलाञ्छनं निजमुरो(?)माच्छादयालोक्यते
प्रेयांसो रसपेशला मृगदृशामानन्दथूत्पादकाः ।
रागाशोकमहीरुहस्तबकितस्तत्पादपद्माहतः
स्वच्छे वक्षसि वल्लभस्य परितस्तच्छायमेतद्बहिः ॥ ८३ ॥

दुष्टास्ताः पुरुषं निरीक्ष्य रमणीपादार्द्रलाक्षारसे-
नाच्छेनाङ्कितवक्षसं ननु मुधा यासां व्यथा चेतसि।
रागाशोकमहीरुहोऽन्तरुदितः किं नावकेशी भवे-
च्चेदन्यापि तथाविधेन न पदा निःशङ्कमाताडयेत्॥ ८४॥

पूर्णं चन्द्रमयोगिनीजनमनःसंतापसंपादकं
सत्यं कामविदो वदन्ति विरहे चन्द्रादयो दुःसहाः।
एतत्त्वत्तनुलग्नचन्द्रकलया सङ्गे तवैवाधुना
वक्षो दीर्यत एव विद्धि झटिति त्वं नाथ दूरं व्रज॥ ८५॥

दोष्णोः पत्रकमुद्रणा नयनयो रागोऽधरे कज्जलं
गात्रेऽपि क्षतमौचिती सुभगयोः स्याद्वाससो व्यत्ययः।
आश्लेषेऽपि परस्परं परिमलः द्रागङ्गरागक्षतिं
किंमूलो हृदि पादपल्लवगलल्लाक्षारसस्यादरः॥ ८६॥

दत्ते तामरसेऽलिनाधरपुटे दृष्टा वराकी सखी
वासस्तत्परिधाय मुञ्चसि चिरं येनाङ्गरागं वमेत्।
मुद्रायै चटुले तथा विदधती प्राप्ता निशीथेऽधमा
नाभिज्ञानमुदाहरेति सुदती दूत्या रतं शंसति॥ ८७॥

नाथ त्वं बहुवल्लभो वयममी जाता दयाभूमयो
भूयस्तल्पमुपागतोऽसि सहसा तत्तेऽधिकं साहसम्।
अन्यस्त्रीजनभुक्तमुक्तमधम स्पष्टापराधं नरं
चित्तेनापि खलु स्पृशन्ति न शठं चण्डालवद्योषितः॥ ८८॥

दूरादुत्थितमुक्तमिष्टमधिकं स्वैरं स्वयं वीजितं
पृष्ठं स्वागतमीरितं च रजनीवृत्तं सखीनां मिथः।
लिप्तं वक्षसि चन्दनेन शयनं निद्रोचितं कल्पितं
यामिन्या मुषितं वितीर्य कुसुमं व्यक्तोऽपराधः कृतः॥ ८९॥

अक्ष्णोर्निक्षिप कज्जलं श्रवणयोराधेहि नीलोत्पलं
पत्रं चारुकपोलयोर्लिख कचं पुष्पस्रजा पूजय।

लाक्षामुज्ज्वलयाधुना चरणयोर्नीवीं च संभावय
प्रातः कोऽपि निगद्यते मृगदृशा रत्या चिरं तुष्टया ॥ ९० ॥
सीत्कारेण विना श्रमादपि विना श्वासेन वाचा विना
नीवीग्रन्थिविमोचनेन च विना गाढोपगूढं विना ।
तल्पेनापि विना विना सहचरीसङ्गेन दीपं विना
यत्किंचित्सभयं तदेव सुरतं दास्यं परं प्रेयसः ॥ ९१ ॥
आश्लिष्यन्नवधीरितश्चटुशतं कुर्वन्मुहुस्ताडित-
स्तल्पान्तादपसारितः स्मितमुखस्तिष्ठन्पुरो वारितः ।
नोदास्ते दयितः कथं दयितयापादानतो नेक्षित-
स्तन्मुग्धे सह यातनापरिणतिं तत्तत्स्वयं कर्मणः ॥ ९२ ॥
मानं मानमुदीरयन्ति कथया मानः स कीदृग्वदे-
न्मुग्धैवं निजवल्लभं स्मितमुखो मानार्थमूचे प्रियः ।
आश्लिष्य स्वयमादरेण दयितं गृह्णाति कान्ताधरे
पश्यन्तीषु सखीषु नाम सुकरो मानस्त्वयाभ्यस्यताम् ॥ ९३ ॥
उन्मीलन्ति सरोरुहाणि मुखतः सौरभ्यमुज्जृम्भते
दीपो दैन्यमुपैति ते मणिरुचा ध्वस्तप्रकाशः स्वयम् ।
इत्थं तेन रिरंसुना न कलिता यावत्करे तावता
कालेनोच्चरति स्म नाम किमपि स्वं ताम्रचूडः खलः ॥ ९४ ॥
गौरोत्तुङ्गपयोधराञ्चलवलच्चित्रोपचारोल्लस-
त्कस्तूरीरसलेपलेखमकरी सारम्भमुज्जृम्भते ।
पक्वप्रच्युतसर्वजाम्बवरसप्रस्फारजम्बूनदी
मीनो मेरुशिलातलेऽपतदिवोत्पत्य क्षणं निश्चला ॥ ९५ ॥
लावण्यामृतनिर्झरा कृशतनुः काचिच्छरन्नर्मदा
पूरोन्मग्नपयोधरच्छलमिलद्गौराद्रिपादद्वया ।
आक्रान्ते जघनस्थले हि पुलिने कान्तेन मन्देतरं
काञ्ची सारसशावकैर्दरदलत्कण्ठैर्मुहुः कूजितम् ॥ ९६ ॥

रागात्संमुखमेत्य खण्डनसहो धन्योऽधरो रागवा-
न्किं नाशाकि पयोधरेण गुरुणा वक्षःशिलाताडनम्।
न त्यक्तं जघनेन पौरुषमितो यावन्न जातो जये
कर्णेन त्रपयेव भूषणमधः क्षिप्तं स्थितेनैकतः॥ ९७॥

प्रातःकञ्चुककर्मणीन्दुशकलं दृष्ट्वा कुचोपान्ततो
बालाचष्ट करद्वयाय निभृतं प्रच्छादयन्ती मुहुः।
मूलं न क्षतमद्य ते नयनयोराकेकरं पश्यतोः
कर्णोपान्तमपागमत्कथयितुं बाहू रणत्कङ्कणः॥ ९८॥

नीली मेचकपट्टसूत्ररचिता काञ्ची रणन्ती कलं
तादृक्पीननितम्बबिम्बफलके बद्धा स्खलद्वाससि।
कन्दर्पामरनाथकेलिशिखरिप्रस्थे चरन्ती मुहुः
कूजन्तीरनिविष्टसारसशिशुर्जम्बूनदीवाभवत्॥ ९९॥

दीर्घाः संप्रति वासरास्तनुरियं नाम्ना त्रियामा तमी
सख्यो दीर्घकथालसा निधुवनं दीर्घायुरेवावयोः।
दम्पत्योरिति जल्पतोः प्रतिनिशं नात्रावकाशः क्वचि-
न्नेत्रे केवलमन्तिके गुरुजनस्याग्रे स्थितं निद्रया॥ १००॥

प्राची रागसमाकुला न सुदतीमानन्दयेदीक्षिता
प्रातः शैशवकैतवं कथयति श्रीखण्डशैलानिलः।
विच्छायस्य सुधानिधेरुपरि सा दृष्टिः पुरस्तात्पते-
रित्थं द्वारमुदाजहार वसतेः कामी पुरः शिल्पिनः॥ १०१॥

सख्यः किं स्तुत ता नवापि ककुभः स्यादुत्तरैवोत्तमा
यस्यां शंकरशैलजार्धकथया दृष्टो न मानोदयः।
यस्यामेकरुचिः शशी न हिमतः पद्मं न याम्यो मरु-
न्न स्वेदो रतिपर्ययेऽपि सततं दीर्घा यया यामिनी॥ १०२॥

किं त्वं जागरितोऽखिलामपि निशं सुप्ता कदाहं पुन-
र्येनैवं मुषिताधरच्छविरसौ प्राच्यां समुज्जृम्भते।

दृश्यन्ते मणयः पुरः कतिपये व्योम्नि प्रकीर्णाः क्वचि-
द्दृष्टा मण्डनसंपदोऽपि भवता त्वद्वल्लभाः सुस्थिताः ॥ १०३ ॥

त तपःसिद्धतरखरतराम्नायसोमवंशावतंसश्रीमालकुलतिलकसंघपालश्रीमद्देहडा-
त्मजविविधबरुदराजीविराजमानश्रीधनदराजविरचिते शतकत्रये
शृङ्गारधनदाभिधानं प्रथमं शतकं समाप्तम् ।

---

नीतिधनदाभिधानं द्वितीयं शतकम् ।

जिनवरपदपूजादत्तचित्तः सुवित्तः
खरतरमुनिशिक्षाधीतविश्वोपकारः ।
स जयति धनराजो देहलस्यैकवीरो
नयधनदमितीदं यस्य नाम्ना चकास्ति ॥ १ ॥

नीतिर्नाम सदञ्जनं क्षितिभुजां सूक्ष्मार्थसंदर्शकं
सिद्धः कोऽपि रसोऽपरो जयमनः सर्वायसां रञ्जकः ।
वारीवेन्द्रियमत्तवारणपतेश्चापल्यसंरोधिका
लक्ष्मीरक्षणयामिकः खलमनोदुष्टाहिबन्धौषधिः ॥ २ ॥

तारुण्यं प्रभुता धनं त्रयमिदं यत्रैकसंस्थं भवे-
त्तत्रास्ते न विवेकिता सहनयैर्वैकैकतो दाधया(?) ।
नित्या नैपुणनिष्ठया प्रतिपदं हस्तावलम्बो न चे-
देतस्याः किल दीयते निजनिजः पन्थाश्च तेषां न वा ॥ ३ ॥

नीतिः संपदि भूषणं विपदि वा दैवाद्विहन्तुं पुन-
र्दैवं सिद्धमहोद्यमा कृतधिया मन्देव संतोषकृत् ।
भूभृत्सद्म विहारकौतुकजुषो धात्रीव यस्याः श्रियो
धर्मस्यागमपद्धती रसवतां सन्मार्गदीपावलिः ॥ ४ ॥

कीर्तिश्रीव्यवहारसाधनतया पुंसां प्रधानं नयः
संदेहार्णवमज्जदीश्वरमनःसंतारणे सत्तरिः ।
मन्त्रस्थानमुदारताब्जतरणिः कामारिदर्पापहा
चेतःसद्मनि सज्जनस्य रमते नानाविनोदास्पदम् ॥ ५ ॥

सूते संसदि संमदं वितनुते युद्धं विनैव श्रियं
रुन्धे दुर्जनचेष्टितं द्यति परं तेजांसि वैरात्मनाम् ।
बन्धूंवर्धयति प्रसज्य सुहृदः संतोषयेदेकतो
नीतिः कस्य न वल्लभोपकरणं नानाविधं तत्त्वतः ॥ ६ ॥

भूपैर्भूपसुतैः प्रधानपुरुषैरन्यैश्च सेवापरैः
सेव्यं नीतिविवेचनं तत इतो न स्यात्प्रमादः क्वचित् ।
हन्तुं वैरिणि सोद्यमे नयविधिः कुण्ठं करोत्यायुधं
शस्त्रेणापि विना करे नयविदां बुद्धिर्भवेदायुधाम् ॥ ७ ॥

परिणतजनसेवा संगतिः सज्जनानां
कविगुरुमनुशास्त्रावेक्षणं सभ्यगोष्ठी ।
नृपसदसि नितान्तासक्तिरध्यात्मचिन्ता
गुरुनगरनिवासः कारणं नीतिवित्तेः ॥ ८ ॥

ज्ञेया नीतिर्भूमिपालेन यत्नाद्योगक्षेमौ यद्वशौ यत्प्रजानाम् ।
कार्याधीने यस्य मैत्रीं विधत्ते प्राणापायः पुत्रतोऽपीह नीयः ॥ ९ ॥

बालः पुत्रो नीतिवाक्योपचारैः कार्ये कार्ये यत्नतः शिक्षणीयः ।
लेखा लग्ना यामपात्रे विचित्रा नासौ नाशं पाककालेऽपि याति ॥ १० ॥

प्रकृतिभिरनुवेलं चिन्तनीयः कुमारो
नयविनयकुलीनाचारचातुर्यशौर्यैः ।
नरपतिकुललक्ष्मीर्हस्तिनी यत्र बद्धा
जयजुषि युगबाहौ चञ्चलत्वं जहाति ॥ ११ ॥

मद्यासक्तिश्छद्मवादः परस्त्रीसेवा दाने कातरत्वं प्रमादः ।
लोकावज्ञेकान्ततो वासबुद्धिर्हासप्रीती राजपुत्रस्य दोषः ॥ १२ ॥

प्रकृतिवचसि जातप्रत्ययोऽधीनविद्यः
समधिकबहुशस्त्रः शिल्पविद्यागुरुश्च ।
प्रथममधिगतार्थो विद्विषाचाररीत्या
नरपतिरिति भुङ्क्ते राज्यमव्यग्रमेकः ॥ १३ ॥

भूमिर्भूपतिवल्लभा बहुगुणा नूनं प्रजास्तत्सुता-
स्तां वाञ्छन्नपि तान्निजानभिभवन्भूपेन वध्यः स्वयम् ।
भूम्यर्थं रिपुसंगरेष्वभिहता यान्तो रुषा संमुखं
योगिप्राप्यमवाप्नुवन्ति हि पदं भूमीभृतस्तत्क्षणात् ॥ १४ ॥

भग्ने राजबले परेण बलिनाक्रान्ते रणप्राङ्गणे
धीरः कोऽपि निवर्तते यदि ततो धन्या प्रसूस्तस्य तु ।
एकैकस्य महाक्रतोः प्रतिपदं यस्य प्रशस्तं फलं
भीतत्राणफलातिरेकमहिमा लोके भवेदस्य वा ॥ १५ ॥

आरब्धस्यापवर्गे स्फुरदमलमतिर्मुक्तमानो नतानां
वित्तायत्तात्मवर्गैः प्रतिकृतिकुशलः सेवकानां कृतेषु ।
विज्ञानस्यैकसीमा गुरुगुणमहिमा धर्मकार्ये प्रवीणः
सेव्यो नाथो वदान्यः सहजकरुणया दीनवत्तावधानः ॥ १६ ॥

मर्मस्पृङ्मर्मवाचा कथितपरगुणः प्रस्तुते चोपकारे
दीने ह्यनावधानो विदितमपि सकृद्दूषणं श्रोतुकामः ।
काले काले धनानां स्मरति च समये सेवकत्राकृतानां
तादृक्सेव्यो न सेव्यो यदि धरणिरियं राजशून्यापि जाता॥१७॥

बाढात्तस्करतोऽपि साहसिकतो वैधर्मिकात्कामुका-
द्धूर्तादक्षविनोदतोऽथ रजनीवीराच्च धात्रीसुतात् ।
कायस्थान्निजमन्त्रिणः स्वपुरुषाद्ग्रामीणपुत्रादितः
प्रौढस्थानिकशासनाद्धरदतो रक्षन्प्रजाभूपतिः ॥ १८ ॥

परयुवतिकथाविदूषकानां वचसि न हासरसः सता विधेयः ।
अपरजति जनस्तथा कथायां पदमपरागपदं महद्विपत्तेः ॥ १९ ॥

किं नान्तर्मलिनः शशी न कुटिलः शेषो द्विजिह्वो न किं
शक्रः किं न बहुच्छलो ननु रविः सन्मार्गसंतापकृत् ।
मार्गः किं न मलीमसो हुतभुजो लोकैरिमेतादृता(?)
इत्थं चेतसि संनिधाय पिशुनो द्वेषे प्रवृत्तः सताम् ॥ २० ॥

तूष्णीमास्ते प्रसन्नो वितरणविमुखः संशयोत्साहकारी
दैवाज्जातेऽपराधे कथयति सहसा शासनं प्राणहारि ।
विज्ञप्तः कोपमेति प्रसभमभिहितो हासमन्त्रोत्तरो वा
गर्वाखर्वप्रमादो रणगणितकुलः सेवनीयो न भूपः ॥ २१ ॥

अविगतजगतार्थो नीतिमार्गोपदेशा-
ज्जनपदहितहेतुः सामदानप्रवीणः ।
बहुसचिवकुलेभ्यो दृष्टशिष्टोपचारः
स्थिरयति किल मन्त्री राज्यलक्ष्मीं चिरेण ॥ २२ ॥

सहायाः संग्रामे प्रथितकुलमाना मदमुदः
प्रवीणा बाणासे सरसमरभेदं विदधतः ।
वशं नीता वित्तैर्विगलितभिदा नापि मिलिता
जयश्रीस्वीकारे तृणमिव निजासून्विजहतः ॥ २३ ॥

पापालापजडाः कलासु कुशलाः प्रेम्णा परं कोमला
भूभृत्कर्मणि निर्मलाः शुचितया लोकोपकारोद्यताः ।
लोभातीतधनार्जना जनमनःसंतोषकारीहिताः
सभ्या दम्भपराङ्मुखाः प्रतिपदं वाचां मृषा भीरवः ॥ २४ ॥

न्यायादेव धनार्जनं वितरणं पात्रेषु तस्य स्वयं
कान्ता रूपवती सती पुनरदः सङ्गः कदाचिद्यदि ।
लब्धो दीर्घतपस्ययापि तनयः प्रेष्यो रणे विद्विपां
केनायं विधिरङ्ग दुष्करतरः सृष्टः सतां शीलहृत् ॥ २५ ॥

वृक्षः सीमारजनिरवनीजातसीता नितान्तं
वाहुः पन्था नगरमुदितं संगरे सद्भटानाम् ।
कोशः केशो नयनमलसं संशये वाग्विचारो
दीर्घा रम्या नगरमटवीवीचयो नीतयश्च ॥ २६ ॥

दक्षः शूरो धर्मबुद्धिः कलाविद्भक्तौ निष्ठः शक्तिसिक्तो विविक्तः ।
स्वामिप्रेष्ये निर्भयः प्राणनाशे पाल्यो यत्नात्सेवको भूमिपालैः ॥ २७ ॥

आलस्योपहतः स्मरातुरमना दैवप्रमाणो धने
भीरुः कातरसंगतो बहुगुरुः पुत्रप्रियो मन्दधीः ।
निद्रालुर्बहुभीषणोऽतिमुखरः पानप्रियोऽहंकृतः
शत्रोः पौरुषगायकः प्रतिवचोदाता च नो सेवकः ॥ २८ ॥

सौन्दर्यैकनिधिर्महाकुलभवा मञ्जुस्वराह्लादिनी
भर्तुर्भक्तिपरायणा करुणया संतोषयन्ती जनम् ।
नानाधर्मकथाविचारचतुरा दाक्षिण्यभृल्लक्षणा
योग्या पुत्रवती महोदयगुणा पट्टाभिषेकोचिता ॥ २९ ॥

मानाम्भोधेरगस्त्यः कुलमदविपुलच्छेदभेदे कुठारः
स्वातन्त्र्यं ह्रासंसीमा मदनरसवशप्रेयसीसङ्गविघ्नः ।
दैत्या हीनोक्तिपाठप्रबलबलगुरुर्लाघवस्यैकबन्धुः
सेवा केयं जनानां परगुणमहिमायासभावैकहेतुः ॥ ३० ॥

सिक्तः सेवासुधाभिः फलति नृपतरुर्वाञ्छितैरर्थजातै-
र्दैवं हत्वा नितान्तं वितरति विविधाः संपदः संगतात्मा ।
प्रौढाहंकारवैरिक्षितिधरशिष(ख)रे हन्त वज्रायमाना
सद्यः प्रोत्साहयन्ती त्वहमहमिकया निन्दनीया न सेवा ॥ ३१ ॥

विज्ञानं नयकौशलं च शुचिता शूरत्वमन्तः क्षमा
सर्वोपाययथोचितप्रणयनं वक्तृत्वमन्तःसभम् ।
सत्यत्वं च परोपयोगि सकलं जीवादिकं यद्वशा-
त्तां सेवां मनसापि मा स्पृश सखे दुःखैकपात्रं महत् ॥ ३२ ॥

भूयो भूयो नमति शिरसा पादयोरीश्वराणां
वाञ्छन्नुच्चैः पदमधिफलं साधयन्नात्ममानम् ।
जीवं मुञ्चेच्छरशतहतो जीविकामीहमानः
प्रायो दुःखं सहति सुखिताहेतवे सेवकोऽज्ञः ॥ ३३ ॥

हीने तेन कुलेन लक्षणलवेनापृष्ठकार्ये तथा
पुण्यानामपि भाजनेन निपुणे नीतौ जने निर्गुणे ।

लक्ष्मीश्चञ्चलतां विहाय सहजामास्ते चिरं यत्फलं
सेवायास्तदवेहि वारणघटा द्वारे च या क्रीडति ॥ ३४ ॥
चकितहरिणयोषिल्लोलनेत्राञ्चलश्री-
र्नवदलसमहस्ताबद्धसच्चामराग्रः ।
सदसि सुखकथाभिर्नीयमानं दिनानि
प्रथयति खलु सेवा प्रौढिमाराधयन्ती ॥ ३५ ॥
अन्यस्याशयवोदि(धि)ता नययथा(ता)स्थानोपदेशज्ञता
विज्ञानाध्ययनश्रमप्रतिकृतिः सभ्यार्थसंख्यास्थितिः ।
नानादेशविनोदवेदनसुधीः कीर्तिक्रमाध्यापिका
सेवा काचन देवता परधनस्याकर्षिकोपासिता ॥ ३६ ॥
निद्राभोजनमासनं च वचनं हासोऽथ वेषः सुखं
तोषः कौतुकचेष्टितं कविकथा कामः क्रमो विग्रहः ।
वात्सल्यं निजपौरुषं नयविधिः प्रीतिः कथागीतिषु
प्रायः सेवकपूरुषस्य सकलं स्यादन्यवश्यं सदा ॥ ३७ ॥
त्रस्तानामुपकारिता सुबहुशो गर्वच्छिदां हंकृतः
कार्यारम्भणनैपुणं निजसुहृत्प्राप्तार्थसंयोजनम् ।
गोष्ठीशीलमहर्निशं नयविधिः प्रस्तावतो भाषणं
शङ्काभावधनार्जने रसिकता विद्यासु सेवाकृतः ॥ ३८ ॥
पिबन्ति जगतो मतं परिसरन्ति शत्रोर्गृहे
बहुच्छलकथारसा विविधशिल्पपण्याश्रयाः ।
वृथा तपसि सादरा नृपतिमन्त्रिपुत्रप्रिया-
श्चरा नगरवीथिका कलितमन्दिरा भूभुजः ॥ ३९ ॥
दूरात्प्राप्तिपरम्पराश्वजननीपित्रोः कलावर्णनं
भूयान्बालदशारयो जनमनःसंतोषतः पालनम् ।
नानाग्राहकवादवर्धितमिदं मूल्यं नृपाणां ग्रहो
वाहस्याशयपौरुषाशनविधिर्वाच्यो हयाजीविभिः ॥ ४० ॥

पृच्छामो भ्रातरो वः सकलजनमनोरञ्जनोपायमेकं
ब्रूध्वं विश्वोपकारव्रतनियतधियः शास्त्रमाद्यं विचार्य ।
सर्वेषां भो परोक्षे वद गुणनिकरं दोषलेशेऽपि मूढो
दम्भं दूराद्विमुच्याचर शुचि चरितं केवलं वाचिरेण ॥ ४१ ॥

अहंकारारिप्सोः परगुणविवक्षोश्च कलिता
भिदा सिद्धिं लिप्सोरुचितमुदयं कार्यमखिलम् ।
चिरेणैकः कार्यं घटयति परं दुःखबहुलं
सुखेनान्यः सद्यो गुणमनुवदन्तेन विहसन् ॥ ४२ ॥

धातर्भ्रातरकारि चेतसि दया नाकारि किं तद्धनं
तच्चेन्निर्मितमादृता न किमियं तेषां विवेको न वा ।
सोऽपीष्टो यदि किं ततः सुकृतिनो नो याचकाः प्रापिताः
प्रायः सर्वगुणोपपादनविधौ वैमुख्यमात्तं कुतः ॥ ४३ ॥

हृतावज्ञातृशङ्को दशरथनृपतेर्व्याधलीलानुरागो
बन्धुश्रीमत्सरत्वं सहजशतगुरोर्वारुणी यादवानाम् ।
कौन्तेयस्याक्षदीक्षा परयुवतिरसो रक्षसामीश्वरस्य
भूयो भूयः प्रतिज्ञास्मरणमभिभवायैव रामस्य जाने ॥ ४४ ॥

निद्रामौनपरोज्झितं न तमसा क्रान्तं जरायां परं
नो दुष्टं निजकाचकामलरुजातीतार्थवीक्षापटु ।
शास्त्रं लोचनमेकमेव सफलं स्यादञ्जनं यत्सतां
गूढार्थं निधिमीक्षितुं कृतधियामुत्साहसंवर्धकम् ॥ ४५ ॥

छद्मन्यार्जवमार्जवे च कपटो द्विष्टेऽथ मैत्री तथा
मित्रे द्वेषणता हठेतिमृदुता स्यान्मार्दवे वा हठः ।
सुस्निग्धे परुषत्वमेव परुषे स्नेहो न वा स्वच्छता
स्तब्धे वानतिरेकतो न सुभगा भीते हिते निर्भयम् ॥ ४६ ॥

दोषावेक्षणचातुरी परधनव्यर्थव्ययोत्साहधी-
र्नीतिद्वेषधनादरो नयविदा निन्दा कथाया मिथः ।

विघ्नः पुण्यकथासु संसदि सतां हासस्य दृष्टान्ततः
स्युर्दौर्जन्यनिबन्धनानि गुणिना हेयानि दूरादरम् ॥ ४७ ॥
न्यग्रोधाध्वनि रोपितोऽसि कृतिना विश्रामहेतोरथ
च्छायावानसि शीलितोऽसि न पुरा दृष्टोऽसि दूरात्कली ।
खेलद्वानरयूथनायकमुखत्रस्यच्छिशूनामहो
मूर्च्छामोहजलार्थिनी निपतिता कूपे क्वचिद्देहिनी ॥ ४८ ॥
रोहिण्या निजवल्लभस्य हृदये कस्तूरिकालेपनं
यद्दत्तं रसपेशलेन विधुना लुप्तं च न प्रेमतः ।
लक्ष्मैतत्किल कल्पितं समभवत्कस्मादिदं तत्कथो-
त्प्रेक्षाकौतुकतो विनिश्चितमिदं पापं महादुर्जनैः ॥ ४९ ॥
श्रोता चेत्खलजल्पितस्य पुरतो हुंकारदाता भवे-
देकः कोऽपि न सज्जनस्य चरिते दोषाः कियन्तस्तदा ।
संभाव्या यदि सज्जनस्य पुरतो दोषैकभूमिः कृते
दुष्टानामपि नो गुणाः कति कति स्युर्दोषजाते तदा ॥ ५० ॥
सिन्धो रत्नाकरोऽसाविति मुदितमनाः कोऽपि लुब्धो धनी नः
प्राप्तस्त्वत्तीरमाराज्जलमुपरसनं थूत्कृतं तृष्यतापि ।
दृष्टास्ते ते सहाया मकरविषधरा मज्जतो भ्रामरारो(?)-
र्भिन्नो मूर्धा क्व रत्नं चिरनिबिडमिलत्पङ्कमग्नं नु दृष्टम् ॥ ५१ ॥
कोपारोपे चेतना धर्मभाजां दीने दृष्टे दीनतैवान्तरास्ते ।
कामासक्तावेकदारोपसेवा पर्वप्राप्तौ शीलनीयास्ति(?)रेव ॥ ५२ ॥
सुमतिभिरुदिता समाधिगम्या
परिणतपुरुषैः कृता समासा ।
नहि परिणतिभाजा येन जानन्ति शास्त्रं
न हि तदपि सदेतद्यत्र धर्मो न नीतः ॥ ५३ ॥
कोऽयं लोकेऽपवादः स्तुतिनिकरपदे यद्यशीले चला श्रीः
साधूनुन्माद्य सद्यस्तरलयति चिरं भूयसा छद्मना यः ।

यस्तस्याश्चञ्चलत्वं कलयति मनसा यातुमुद्यच्छलाया
दाने भोगोपयोगे व्ययकरणमदो दोषनिर्यातनाय ॥ ५४ ॥
उत्पत्तिः क्षीरसिन्धोः सहजशुचिरुचेरेष पीयूषमूर्ति-
र्बन्धुर्देवस्त्रिलोकस्थितिकलितजनुर्दुःखभारेऽपि भर्ता ।
पद्मे केनोपदिष्टो भगवति कुलजा निन्दितो मन्त्रपाठो
यत्ते दृष्ट्वा जनानां मुखनयनमहो वैकृतं याति तूर्णम् ॥ ५५ ॥
गुरोर्वचनकारिता विधिषु दत्तभूरीक्षणः
पुरो भवति तेजसो वशितदर्पकः कर्मणि ।
कणादकृतसंमतिः प्रथितमन्युमानोदयः
सुराधिप इवोद्यतो भवति लोकपानाग्रणीः ॥ ५६ ॥
शुचिः स्फुरति नाम नो सदसि यज्वनामग्रणी-
र्निजाशनविधौ कृतप्रचुरवर्गतृप्तिः क्षणात् ।
धनंजयमहोजसोस्तमसि चित्तजातस्मृतेः
पुरंदरकृतान्तयोः समतयेव मध्यस्थितिः ॥ ५७ ॥
धर्मावेक्षणकौतुकेन गणितप्राणिप्रमोदादयः
शक्तिप्रापितदण्डनीतिमहिमा वाहद्विषत्प्रेरणः ।
आयुर्मर्मविवेचनः स्मृतिजुषामेकः परासो रसा-
प्रायोपायवशीकृताखिलजगत्कोऽपीह धन्यो जनः ॥ ५८ ॥
नाम्ना पुण्यजनोऽयमाधिकपदो दृष्टप्रचेतःस्थितिः
खड्गाधीतिविचक्षणः क्षणदया जाग्रद्विहारोदया ।
वाञ्छामात्रसुसिद्धकार्यगरिमा वीभत्सितो निर्भयो
धीरः कोऽपि चतुर्थदिक्पतिसमो मन्युप्रदद्वेषणः ॥ ५९ ॥
प्रतिजलनिधिजाग्रन्नामधामाभिरामः
शरणगतमहीभृत्पक्षसंवर्धनश्च ।
परिचितबहुशब्दो नागराजोक्तिबोधा-
द्वरुण इव विनीतो नायकः साध्यवक्रः ॥ ६० ॥

भूयो भूयो मृदुः सन्स्पृशति सुमनसः कम्पयञ्जानुशाखा-
माशामेकां च गृह्णन्कवलयति दिशो वेगतः स्यादृशापि।
तोषं तोषं निजांशैरपि कुटिलगतीन्नाजसंभावमाप्तः
सद्यस्तब्धान्नितान्तं नमयति तरसा स्यादकम्पो रुषापि॥ ६१॥

बहुविधधनरक्षासिद्धवित्ताधिपत्रः
शुचिविततगतापन्मानसोऽपीशमित्रम्।
नरपतिकरयानः सर्वविज्ञानसीमा
नरपतिरिति चेष्टस्त्यक्तबन्धूपतापः॥ ६२॥

सर्वज्ञोऽनन्तशक्तिः क्षितिभृदधिपतेः कन्यया दत्तरागो
नित्यं खिद्यत्कुमारो गुणिगणपरिषद्गीततत्संपरायः।
उद्यन्नेत्रः प्रकोपे रजनिचर सहक्रीडया शीलिताङ्गः
सर्वाधीशैकमान्यः क्वचिदपि विषये विद्यमानो नरेश॥ ६३॥

भूभारोद्धरणैकसाहसरसो नानेक्षणः कार्यतो
विश्वाधीतवचःक्रमः कुटिलतामाप्तां जहत्सेवया।
निःशङ्को बलिना परेण निलये क्रान्तेन गोपायते
मित्रीयत्पुरुषोत्तमो विजयते नागेशवद्भूपतिः॥ ६४॥

नामा निर्माणलीलागमितदिननिशो वेदवेदान्तसिद्धौ
शश्वद्दत्तावधानो विविधविधिकथाकौतुकाक्रान्तचित्तः।
यात्रामात्राग्रसंस्थप्रकृतिकृतवचो राजहंसप्रचारो
धातेशः सप्रजानां प्रसरति सततं वाञ्छितार्थं वितन्वन्॥ ६५

सौजन्येन सुखं ननाम मनसः सत्तापसत्ता क्वचि-
त्कीर्तिः कौतुकिनी विलोकयति सद्वस्तु स्वयं विश्वतः।
सर्वस्याशयवाससाहसरसश्चेदस्ति तत्सेव्यतां
जिह्वे तद्वद कोमलं परगुणं कल्याणि मैत्रास्पदम्॥ ६६॥

भेदो वा पाण्डुता वा सहजपरिणतौ भूषणे स्यात्फलानां
पङ्को वा दारणं वा भवति च सुभगं शालिकेदारभूमेः।

पातो वा दूरतो वा दरणमनुतटं निम्नगानां विलोक्यो
दोषो जायेत वेषः क्वचिदपि विषये वस्तुजातिस्वभावात् ॥ ६७ ॥
यात्रामात्रप्रकारे प्रसरति विषयव्यापिनीनामशङ्का
वायोरेकः पुरस्तान्नरपतिकुलजैः शिक्षणीयो गणोऽसौ ।
स्वार्थभ्रंशानपेक्षापरहितनिरतिः श्रान्तसंवाहनं य-
द्विश्वं तेनोपदिष्टा जगति तु मरुता कार्यमिष्टं परस्याः ॥ ६८ ॥
नीचत्वे निम्नगाः स्युर्जगदुपकृतयेवौषधिः काननत्वे
शैलत्वं राजदुर्गे लवणसमुदयः स्वादसीमोषरत्वे ।
शालेयं स्यात्समत्वे स्थलतरमवने राजधानी मनोज्ञा
तत्किं सर्वसहायाः परहितनिरतं यन्न जातं विशेषात् ॥ ६९ ॥
नीचैरुच्चैः पदव्या घटयति नितरामुच्चमत्यन्तनीचं
ज्ञात्वा भूयः प्रयोगं रचयति नयतो तोषमन्यस्य कुर्वन् ।
रिक्तं पूर्णं वितन्वन्समुदयतितरां रेचयन्पूर्णमन्तः
कुम्भी यन्त्रोपजीवी परपरचलनोपायविज्ञो नरेशः ॥ ७० ॥
बध्नात्येकं विचार्य स्वगुणघटनया मालयान्यन्नियुङ्क्ते
एकत्रैवोपविश्य भ्रमयति सकुलं मण्डलं गोचरेण ।
एकं कृत्वा प्रधानं दृढमधिकतरायामयुक्तं मनस्वी
तस्मिन्नारोप्य शेषं प्रकटयति धनं यन्त्रजीवीव भूपः ॥ ७१ ॥
नानाकार्योपयुक्तं लघुमपि च गुरुं तुल्यमानं गृहीत्वा
ज्ञातुं वस्तुस्वरूपं बहुषु परिगतेष्वेकमेकं क्रमेण ।
संबोध्य स्वस्थचित्तः समुचितविहितस्वार्थलाभो विचारा-
दन्यच्चान्यद्गृहीतुं नियमयति धनं भूमिनाथो वणिग्वत् ॥ ७२ ॥
भिन्नं संदधदावरेण सहसा भिन्दन्परं संहतं
वृद्धं साम्यमुपानयंश्च बहुना हीनं गुणैर्वर्धयन् ।
योगे कस्य च नोपपाद्य दृढतां रक्षन्दशामग्रतो
गाढं पीडयति प्रधानमसकृत्कश्चित्कुविन्दो यथा ॥ ७३ ॥

स्वातन्त्र्यादिव योषितो नयपथाभावादिव श्रीभरा
निःस्नेहादिव बान्धवाः परगुणद्वेषादिव प्रीतयः ।
कार्पण्यादिव सेवका बहुमृषालापादिव प्रत्यया
गर्वादन्यरता भवन्ति सहसा लोकाः स्वयं भूपतेः ॥ ७४ ॥
मर्यादा स्थितये करो नरपतेर्नार्थक्रियासंपदे
शश्वद्भूरिजयश्रिये रणकथा नैवान्यविच्छित्तये ।
पुण्यायैव धनार्जनं बहु मतं नो भोगसंपत्तये
शीलायैव नयस्थितिर्न परतो विश्वाससंवित्तये ॥ ७५ ॥
रविरिव विजिगीषुर्मण्डलं रक्तमुच्चै-
र्दधदुदयति पूर्वं शीलयन्दक्षिणाशाम् ।
तिरयति परतेजःसंहतिं कर्मसाक्षी
घटयति किल चक्रं भिन्नमन्यप्रयोगात् ॥ ७६ ॥
रजो भवति सुन्दरं तनुषु लग्नमेकान्ततः
शिशोः समरभूमिजं वियति नीतमुच्चैः पदम् ।
पतत्पुनरनाकुलं तरुणवीरकूर्चस्थितं
खलास्यपरिपूरकं सदसि कीर्तितं सर्वतः ॥ ७७ ॥
आकाशस्य विशालताथ महसामेकास्पदत्वं तमः-
प्राप्तौ व्रीडितचेष्टितं श्रुतिपथस्यारम्भहेतुप्रथा ।
सर्वाशैकनिबन्धनत्वमखिलज्येष्ठत्वनीरोगते
दीर्घायुष्ट्वमनाकुलत्वमसकृत्संचिन्तनीयं सता ॥ ७८ ॥
सर्वस्यान्तश्चरति सततं रञ्जयत्येव विश्वं
स्पर्शादस्य स्फुरति शुचिता मित्रजीवायमाना ।
उच्चस्थायी प्रथितकुलता रम्यरम्यस्वभावो
वायुः सेव्यो द्विगुणचरितो भूतवर्गे द्वितीयः ॥ ७९ ॥
यच्चक्षुः पुरुषोत्तमस्य विविधालोकैकहेतोः परं
रूपस्यास्पदमेकमेव मरुतामाहारहेतूदयम् ।

तेजः सिद्धमनेकधास्थितमधिक्षेप्तुं न शक्यं परैः
शक्तिः काचन कौतुकाय सुधियां यस्यातिभूमीयते ॥ ८० ॥
दोषारम्भककौतुकेन शशिनो जातं महल्लाञ्छनं
तच्चेन्मण्डलमण्डितेति विमले व्यक्तं पुरो दृश्यते ।
तस्मादुज्ज्वलचारुतारचरितेनैकान्ततो मुच्यतां
दोषाशङ्कि चरित्रमुज्ज्वलतरं नूनं यशश्चिन्वता ॥ ८१ ॥
हासे वाचि निरीक्षणेऽपि सरसे लीलायिते वा मनो
मा धेहि प्रसभं निराकुरुतरां यान्तं कदाचिद्यदि ।
भूमिः कैतवकर्मणो धनमनु प्रेमोपपत्तिः स्थिरा
मत्तत्वैकजनिर्विना मदिरया वेश्या न वश्या नृणाम् ॥ ८२ ॥
वित्तं वीक्ष्यैव हासो बहुविधविनयो वञ्चनायोपयुक्तो
मोहस्यैवोपपत्त्यै दृढमृदुलभुजाश्लेषशिक्षोपदेशः ।
शीलभ्रंशाय पुंसां रतविधिषु गलद्व्रीडितं कैतवेन
प्रायो मूर्च्छास्मरार्तौ मनसि च कठिने मूर्च्छनायेतरस्य ॥८३॥
छन्ने ये कामयन्ते मलकुलजनुषः पापधीदत्तचित्ता-
श्चौयापायात्तवित्ता अपि जडमतयोऽहंकृताः पण्डकाश्च ।
सेव्याः सख्यो हि यासां किल धनविरहे वारणीया जनन्या
धर्मो यासां निजोऽयं कथमिह रमते वंशजः पुण्यजन्मा ॥८४॥
द्यूते वेश्यासु मद्ये नयत यदि सुखं वाञ्छसि भ्रातरेकं
वित्ताधीनस्त्रिवर्गो भवति न तदिहाधीनचित्ते कदाचित् ।
चौर्यस्यैकास्पदं तत्रितयमपि मृषावादशब्दाभिधानं
बन्धुद्रोहैकसीमा विविधनयकथाद्वेषिणी पद्धतिः सा ॥ ८५ ॥
यागे सौरभनिर्भरः परपुरप्लोषे वला भूभुजा-
माकाशेति ततः परं च मरुता धूमः श्रिया भुज्यते ।
माने प्रेयसि संमुखे सुवदनानेत्राम्बु धत्ते श्रियं
किं वा बाष्पविनिर्गमोऽतिमधुरः स्याद्दन्निजामध्वरे(?)॥ ८६ ॥

चन्द्रः पूर्णकलः फणी कृतफणः शाखी प्रसूनाञ्चितः
शूरः संगरसंमुखोऽध्वरमुखे विप्रः पुरः पूजितः ।
शुश्रूषाकृतगौरवोऽपि कथको वाजी तु पर्याणितो
निद्राणो गजनायको बहुरसः प्रेक्षावतां जायते ॥ ८७ ॥

यदि सदसि पुरस्ताद्वक्ति वाचस्पतिः किं
बहुबुधकविमध्ये वर्तमानस्तदेतत् ।
स्फुटतरमनुकूलं वान(?)वित्रं तु वृद्ध-
श्रवसि कृतकथाया जायते तत्स्वभावात् ॥ ८८ ॥

विश्वस्ते स्वोपकारिण्यवितथवचने शुद्धबुद्धिप्रकारे
शूरे धर्मप्रमाणे तपसि कृतमतौ वेदविद्याप्रमाणे ।
सद्यः कामोपपत्तौ परयुवतिकथा पापवृद्ध्यैव भीते
मास्तां पापं कदाचित्परहितनिरतं भक्तिनम्रे स्वभावात् ॥ ८९ ॥

दूरं कृत्वापमानं प्रभुगुणगणनापेशलो मानमग्रे
तिष्ठन्तं संविभाव्य प्रकटयति निजं साधयत्कार्यमेकः ।
स्वार्थभ्रंशेन किंचित्फलमधिकमदो मानिनो मानपोषे
काले मानोऽपि कार्यः सपदि परिभवं चिन्त्यमाने परेण ॥ ९० ॥

लक्ष्मीं नाभेयनामाजयमजितमुनिः सद्भवं संभवोऽसा-
वानन्दं सोऽभिनन्दो मतिमपि सुमतिः सद्मपद्मप्रभुः सत् ।
पापापायं सुपार्श्वो वितरतु सततं धामचन्द्रप्रभुश्च
प्रत्यूहस्यान्तरायं सुविधिजिनपतिः शीतलः शान्तभावम् ॥ ९१ ॥

श्रेयान्निःश्रेयसानां विधिमथ नितरां वासुपूज्यश्च पूजां
वैमल्यं चेतसोऽन्तर्मुनिरपि विमलोऽनन्तनाथो यशोऽपि ।
धर्मो धर्मोत्तमो वा धनमधिधनदं शान्तिनाथः सुसार्थं
काव्यं श्रीकुन्थुनाथो रिपुमथनमरो मल्लिनाथः कथास्ताः ॥ ९२ ॥

सुव्रतो व्रतसंपत्तिं नमिर्नेमीनयाभये ।
पार्श्वनाथः सुपार्श्वत्वं महावीरो बली बलम् ॥ ९३ ॥

चिन्तामणिः संप्रति भक्तिभाजां तपस्यया त्रासितदेवनाथः ।
दयोदयः प्रीणितसर्वलोकः सिद्धो गरीयाञ्जिनभद्रसूरिः ॥ ९४ ॥

जगति विदितनामा धर्मकर्माधिकारी
कुलनलिनदिनेशो मन्त्रविज्झुज्झणाख्यः ।
घनसमयविरामे लब्धकान्तिः शशाङ्क-
स्तुलयति यदि कीर्तिं यस्य नश्यत्कलङ्कः ॥ ९५ ॥

अमुष्य तनया जाता सौभ्रात्रविनयाश्रयाः ।
षडमी लोकपालाः किं यमराक्षसवर्जिताः ॥ ९६ ॥

**श्रीचाहड**स्तदनु **वाहड**संघपालो
धीरस्तृतीय इह **देहड**नामधेयः ।
**पद्माकर**स्तदनु पञ्चम **आल्ह**नामा
षष्ठः समस्तगुणराशिरभूच्च **पाहू** ॥ ९७ ॥

दुर्गं **मण्डप**नामधेयमखिलक्ष्मामण्डलीमण्डनं
दृप्यद्**गुर्जर**पातिसाहिमहसामस्ताचलाग्राञ्चलम् ।
तृष्णाव्याकुलकुम्भसंभवमुनिस्वाचान्तरिक्तार्णव-
स्फारापारगभीरसीरिपरिखाप्रेङ्खालसन्मेखलम् ॥ ९८ ॥

**गोरी**वंशैकरत्ने यवननरपतौ श्री**मदालंमसाहि**-
माद्यद्दन्तावलौघक्षतरिपुनगरद्वारदीर्घोऽर्गलाग्रे ।
नीत्या तृष्यज्जनान्तः स्थिरतरचरिते शासतीद्धप्रतापे
संतप्तारातियोषिद्विनयभरगलद्भूरिसंग्रामयासे ॥ ९९ ॥

तन्मन्त्री **देहडः** सन्दिनमणिबिरुदोऽशेषतीर्थंकराणां
चारित्रश्रोतृवृत्तिः खरतरमुनितो लब्धतत्त्वोपदेशः ।
गङ्गादेवी च साध्वी सुचरितकुलजासूत यं सूनुरत्नं
धीरः सोऽयं **धनेशो** यतत बहुतमः कौतुकेन त्रिशत्याम्॥१००

शृङ्गारनीतिवैराग्यशतकत्रयमञ्जसा ।
धनदाभिधया यातु प्रसिद्धिं विद्भिरादृतम् ॥ १०१ ॥

वर्षे व्योमाङ्कवेदक्षिति(१४९०)परिकलिते विक्रमाम्भोजबन्धो-
वैंशाखे मासि वारे त्रिदशपतिगुरोः शुक्लपक्षेऽहितिथ्याम् ।
जीवाब्दे सौम्यनाम्नि प्रगुणजनगणे मण्डपे दुर्गकाण्डे
ग्रन्थस्यास्य प्रतिष्ठामकृत **धनपतिर्देहडस्यैकवीरः** ॥ १०२ ॥

यावत्कल्पकथाकुतूहलकरी यावच्च जैनागमः
शेषं सादरमादधाति धरणीं शीर्षेण यावच्चिरम् ।
यावत्सन्ति पयोधयोऽपि निखिला मर्यादयोद्यन्मुदो
विद्वत्सु त्रिशती विराजतुतमां तावद्धनेशाज्ञया ॥ १०३ ॥

इति तपःसिद्धतरखरतराम्नायसोनवंशावतंसश्रीमालकुलतिलकसंघपालश्रीमद्देहडात्मजविविधबिरुदराजीविराजमानश्रीधनदराजविरचिते शतकत्रये नीतिधनदाभिधानं द्वितीयं शतकं समाप्तम् ।

---

वैराग्यधनदाभिधानं तृतीयं शतकम् ।

सिद्धौ व्योम्नो द्वितीयस्तदुदितमरुतः संपदो यस्तृतीय-
स्तेजस्तोऽस्माच्चतुर्थो भवति च पयसः पञ्चमस्तन्निमित्तात् ।
षष्ठः सर्वंसहाया जलकलितजनैरेकरूपः समन्ता-
दाभासेनैव नाना जयति लयजनुःकारणं सोऽन्तरात्मा ॥ १ ॥

श्रीमालः श्रीविशालः खरतरमुनितोऽधीतधर्मोपचारः
पारावारान्यतीरप्रचुरदुरयशा दानसंतानबन्धुः ।
नानाविद्याविनोदस्फुरदमलशमः कामरूपाभिरामो
जीयाद्धन्यो **धनेशः** शमशतकमिदं यस्य नाम्ना विभाति ॥ २ ॥

संसारे सारवस्तुप्रथममुपगतं पुण्यमस्य प्रकारा-
द्दानं शीलं तपस्या त्रितयमभिहितं साधुसंघैर्विविच्य ।
स्वर्गस्तस्यापवर्गः सुखयति स च नो कंचन प्राप्तबोधं
वैराग्यं तस्य हेतुस्तदखिलमधुना कथ्यते मोक्षसिद्ध्यै ॥ ३ ॥

आलापो वीतरागैर्विषयपरिणतेरेकचित्तेन चिन्ता
साक्षात्कारो रुजाया जननमरणयोरागमेषु प्रमाधीः ।

सत्त्वोद्रेकः स्वभावादिदमखिलमहो नश्वरं चेति बोधो
हेतुर्वैराग्यजन्मन्यपि धनतनयस्त्रीवियोगः कदाचित् ॥ ४ ॥
काष्ठान्ताबद्धरश्मी शशिदिवसकरावेव निर्माय पात्रे
पुण्यं पापं विविक्तस्तुलयितुमसकृद्वाञ्छतीवेह कोऽपि ।
पुण्यस्य ज्योतिरेतद्विलसति सवितुर्मण्डले दीप्यमानं
चन्द्रस्यान्तर्यदेतन्मलिनमिव परं दृश्यते पापमेतत् ॥ ५ ॥
शान्तिः काचित्कुमारी दमयमकुलजा शीलवीरैकबन्धुः
पित्रा बोधेन दत्ता सममुपनिषदा मानिनेऽस्मै वराय ।
वीरं संतोषमेकं विविधगुरुकुलाधीतनीतिं प्रसूता
ग्रावाणो यस्य याताः कनकपरिणतिं शालयः शाकपाकाः ॥ ६ ॥
शोकाग्निज्वाललीढे बहुविधविषयस्नेहपूरे गभीरे
संसारेऽस्मिन्कटाहे जनवनशकुनीन्मोहजालेन बद्धान् ।
भर्जं भर्जं यदश्नन्विकटयति मुखं चन्द्रसूर्यच्छलान्त-
र्दृश्येते कालदंष्ट्रे सदुडुपरिकरं कीकसं तत्प्रतीमः ॥ ७ ॥
रज्यद्बिम्बाधरश्री पिशितसवलितं रोमराजीवसूत्रं
भ्रूवल्लिक्षेपकालायसबडिशमिदं तत्कटाक्षोपकर्णि ।
अस्यां संसारनद्यां वितरति कुतुकी निर्दयोऽयं कृतान्त-
स्तद्ग्रासाल्लासधारां परिहरत परं भ्रातरो लोकमीनाः ॥ ८ ॥
नापेक्षा भूषणानां भवतु न नितरां चन्दनेनाङ्गराग-
स्तस्यारम्भोऽपि दम्भो वसति तरुणयोः प्रेम चेदेकमन्तः ।
तद्वच्चित्तं विरक्तं यदि वसतिरियं कन्दरा बन्धुवाचः
प्राणायामः सुखेन स्थितिरपि विदितं योगिनामासनं तत् ॥ ९ ॥
कस्मै संचारदीपाः पथि पथि विहिताः स्वर्गसोपानमार्गे
रम्भे कुम्भं निधाय स्वशिरसि पुरतः कस्य हृष्टा प्रयासि ।
तीर्थे तीर्थे तपस्या रविचिरमधुना सोऽधुनेहाभ्युपेत-
स्तावत्क्लेशेन तत्किं कृतमिह नयतो जायते स्वप्रकाशः ॥ १० ॥

पित्रोरासीच्छिशुत्वे गतवति विगतं शैशवे तत्पुरस्ता-
ज्जातं नारीषु पश्चात्तरुणिमनि गते मूलतस्तद्विनष्टम्।
पुत्रे प्रेम स्थविष्ठं यदभवदमलं तस्य नाशो न भावी
भावी चेच्चिन्तयामः पदमविकमदानन्दकन्दं तदन्तः॥ ११॥

पुण्येऽरण्ये कदाचित्तरुवरनिबिडच्छायया जातशातः
प्राप्तः किंचित्समाधिं परिचितपरमज्योतिरानन्दसान्द्रः।
कर्मच्छेदापराधप्रकुपितशमनभ्रूकुटिभ्रंसहासा-
न्नेष्येऽहं वासराणां निमिषमिव शतं सज्जनैरीक्षमाणः॥ १२॥

तल्पेऽनल्पे शयालोरचलजयलवप्राप्तनिद्रासमाधे-
र्हैमाद्रेरेकदेशे सहजपरिणतं बिभ्रतः पत्रमङ्के।
शोभां दद्युः कदा मे विषमविषधराः पीडनादुच्छ्वसन्तः
सद्यः क्षीरोदपूरे फणिपतिशयने सुप्तपीताम्बरस्य॥ १३॥

सिध्यत्पर्यङ्कबन्धस्थिरसकलजनोर्भाविनी मे पुरस्ता-
द्रङ्कोरङ्के शयालोरपघनबहलामोदमन्दाविलास्या।
गन्धादुद्वीज्यमाना सरसरसनया सृक्कणी लेलिहाना
रंहःसंहारधीरा मृगपतिरमणी पालिता स्वा शुनीव॥ १४॥

भृङ्गारे भीतिभारावधिकमिति फलं पीतपत्रे तदेव
सौधे हिंसाप्रयत्नौ क्षितिधरविवरे निर्वृतिः सा समैव।
खेदश्वासौ नटीनां धृतिरिह नयने केकिनाख्ये तथैव
तस्मादायासभूयः सुखमिलविपिने योगिनां हेडयैव॥ १५॥

भोगं प्रायः प्रयत्नाद्धटयति पुरुषो न स्वयं सिद्धिरस्मि-
न्नास्तामन्यत्प्रभूणां पवनलवसुखं तावदग्रे वदामः।
येऽमी शश्वत्प्रवृत्ता जगदुपकृतये ये पशोरप्यवार्य
हिंसा तादृक्पशूनां सरभसरमणीबाहुपीडा तदर्थम्॥ १६॥

दस्योराराद्दृश्यात्त्रयशरणिमुखो बिभ्रतः पञ्चबाणां-
स्त्रस्यन्तः केऽपि सन्तः सपदि तरुणतां पूरपारे विशन्तः।

वक्षोजद्वन्द्वतुम्बीयुगमुरसि निजे गाढमाबध्य नूनं
मग्नाः संसारनद्यां न पुनरुदितये जातु दुम्बीभरेण ॥ १७ ॥
का त्वं माया किमेतत्पृथगसि पुरुषादात्मनश्छद्मबुद्धे-
रात्मोदास्ते यथासावहमपि च तथा पर्यये पूरुषस्य ।
निर्णीता वीतरागैः परिषदि कथया सर्वथैवासतीति
किं सन्नात्मा तथात्वं किमिति न समता मादृशामीश्वरेण ॥ १८ ॥
आः किं नाद्यापि मुक्तः प्रतिजनि जगतामायुरल्पं गुरुभ्यः
श्रूयन्तेऽमी उपाया भवति विधिवशात्तावदायुः समाप्तम् ।
साधो किं तेन कायः किमु न धमनयः किं न नासासमीरः
संचारी तासु न स्युः किमु धरणिधराः कन्दराः किं न तेषु ॥१९॥
नासाश्वासावरोधादनिमिषनयनारम्भतः कम्पहाने-
र्मुग्धा काचिद्वनान्ते शबरसहचरी देवतैवेति मत्वा ।
कण्ठे धत्ते मधूकस्रजमतिधवलामादरेणानमन्ती
राजिष्येऽहं ययायं हठकृतचरणः किंतु मुक्त्या रमण्या ॥ २० ॥
शश्वत्संघट्टनष्टो(?)परितुप शुचिभिस्तारकारक्तिकाभिः
कालः कूठः प्रमाता तुलयति जगतामायुरूनाभिनाभिः ।
तस्मादेवातिहीनं भवति जनिजुषामात्मना कर्मदोषा-
द्भक्तुं जानन्ननीशः प्रभुरयमधिकं सह्यते सर्वमस्य ॥ २१ ॥
नाडी काचित्सुषुम्ना प्रसरति परितो लम्बिका बद्धमूला
ब्रह्मस्थानेन्दुबिन्दुप्रसरणपदवी सर्पवक्राष्टवक्रा ।
तस्या वक्रे कथंचिद्विशति यदि मरुत्तृसियोगो विनाशी
तुष्टा शश्वद्यतोऽमी हिमकिरणसुधां नाद्रियन्ते मुनीन्द्राः ॥ २२ ॥
ऊर्ध्वाधोरोधसिद्धश्वसनगतिवशाद्भिद्यमाना परान्त-
द्वारानीता मृतांशप्रशमितमरणत्रासनिःशङ्कचारः ।
जीवस्तस्माच्चिरायुर्भवति किल जनः पिण्डमेवेहमानः
सिद्धीस्तास्ता दधानो गगनचरजना दृश्यतादिस्वरूपाः ॥ २३ ॥

धातः के तेऽपराधाः कथय मतिमतामिन्द्रियाणाममीषां
संसृज्यन्ते मुनीनामलमिह वपुषामूनि येषां बलेन।
बद्धेव श्वाससिद्धे मनसि परिणते पञ्च नो वञ्चयित्वा
सिद्धे साध्ये कथंचित्सपदि परतरं ब्रह्म शुद्धं प्रयान्ति॥ २४॥

चत्वारो योगभेदा द्विविधमिह मनो वायवः पञ्च पञ्च
द्विप्वः(?)साध्ये समाधिस्त्रिविधमुपगतं ध्यानमेकः परात्मा।
सिद्धावस्थाश्चतस्रोऽप्यवयवघटनाकीर्तितेहाष्टसंख्या
योगारम्भेऽयमुक्तः परमपरिचयः संतताभ्याससाध्यः॥ २५॥

कामाक्षामेतरेपु ज्वलनकचलिते मानिता नक्रचक्रे
कान्ता कान्तेक्षणश्रीसरभसलहरीमग्नशीलोरुशैले।
संसारक्षारसिन्धौ प्रविशति पुरुषः किं न रत्नद्वयं चे-
द्गोष्ठी विद्वज्जनानां परिषदि नृपतेर्भीतसत्त्वोपकारः॥ २६॥

संसारस्यास्य मोके विधिरतिसुकरो वर्णितोऽयं विचारा-
न्नात्रापेक्ष्याः सहाया धनमपि न हितं वाससां नापि चिन्ता।
नाहारारम्भदम्भो वसतिरपि तथा नो न शय्योपतापः
पाल्याः पुत्रा न दारा मणिकनकमयैर्भूषणैर्नार्चनीयाः॥ २७॥

केयं बाला वराकी तरलयति दृशौ मन्दमानन्दहेतू
संशेते चेति चित्ते भवति न पुरुषः कोऽयमन्यः प्रकारः।
आनन्दानाममैषां सततमलवतो पीतरास्यानिकृष्टा-
स्तत्किं कुर्मोऽनभिज्ञाः शिथिलयति मदं नाधुनापीदृगेतत्॥ २८॥

न त्रस्ता भूपतिभ्यो मृगपतिकुहरे निर्विशन्तोऽपि धीरा
लीला येषां कदाचिद्विषधरवदने स्वाङ्गुलिक्षेपणेन।
क्षुभ्यत्पञ्चास्यबिभ्रद्गजकुलकलहे ये च मध्ये भवन्ति
स्फीतास्ते शान्तभावाः शिशव इव जिता लीलया वाणिनीभिः २९

दृष्टं यद्दृष्टमुच्चैरुदयति सुतरां मङ्गलाभावहेतु-
र्दृष्टे(?)यत्रापवित्रं युवतिरपि भवेद्धर्मकर्मैकबन्धुः।

तच्छेषे शुक्रयोगात्पुरुष इति परं तस्य चेत्पापवाञ्छा
तत्पुण्यं कीटजन्म प्रलयसमुदयौ यत्र सद्यः स्वभावात् ॥ ३० ॥
मातर्माये श्रुतासीरुपनिषदि परब्रह्मणस्त्वं द्वितीया
लीलायन्ते प्रपञ्चप्रकृतिपुरुषयोः कापि शक्तिस्त्वमेव ।
भूयो भूयोऽनुभूतं यदि तव चरितं त्वद्वधे पुण्यमेव
प्रारम्भः कुत्र पुंसः स्वत इव दुरितप्रागभावोऽपि सिद्धः ॥ ३१ ॥
लिम्पन्तश्चन्दनेन प्रतितनुसविषैः कण्टकैर्वा तुदन्तः
सानन्दं वा स्तुवन्तः प्रतिपदकथया दोषमुद्भावयन्तः ।
ग्रासे ग्रासे नयन्तो मधुरमथ विषं निक्षिपन्तः कदा मे
ते ते चैते समानाः सहजपरिणतज्ञानसिद्धिं गतास्याः ॥ ३२ ॥
द्वित्रैः सद्यः प्रसूतैः प्रथममुपचितं पञ्चषैर्जातदन्तः
सप्ताष्टैर्वृत्तचूडैः पुनरधिकदशैः शैशवातीतपुंभिः ।
विंशत्या त्रिंशता वा परिणतवयसां सैकपञ्चाशतैवं
द्यूते कालश्च कालीपणमुचितनुतः प्राणिभिर्नित्यमेव ॥ ३३ ॥
बद्धा रुद्धा विरुद्धा जनशशशिशवः खण्डिताः पुंवराहा
दर्पान्धाः स्कन्धबन्धे नरपतिमहिषा लक्षिता वीक्षणेन ।
विद्धन्नागानुरागात्पथि पथि निहता ज्ञानसिद्धोऽपि सिंहः
कालं व्याधेन नीतः स्ववशमिति जगत्कानने कर्मदावे ॥ ३४ ॥
यातायातेन खिन्नो निशि निशि सुतरां कालचौरो निरासो
जीवं रत्नं समन्तान्मुमुषिषुरधिकं जागरूकस्य जन्तोः ।
द्वारे द्वारे कपाटं दृढमलघुतरं कर्म दत्त्वोपदिष्टं
ध्यानं कृत्वा प्रदीपं श्वसनपरिभवं सर्वतः संनिरुध्य ॥ ३५ ॥
भित्त्वा भित्तिं समाधिं विषयसुखकुशी कौशलेनैव सद्ये
यामिन्यां जागरूके मनसि शशिमुखीप्रेममद्येन मत्ते ।
बन्धुत्यागापराधान्महिमनि गलिते पञ्चसु न्यक्कृतेषु
मुष्णात्येव प्रमादाच्छ्वसितघनमिदं प्राणिनां कालचोरः ॥ ३६ ॥

शीलं शीलं दिधक्षोः कलिदवदहनाद्भिभ्यतः पुण्यमेरो-
रन्तः सन्तो विशन्ति ध्रुवमिह जगती जन्मधूमोपतापः ।
तत्किं नाराधयन्ति त्रिपुररिपुपदद्वन्द्वमेघं(?) य एष
ज्ञानापासारसेकाच्छमयति सपदि ज्वालजालं क्षणेन ॥ ३७ ॥

नाहं कस्यापि कश्चिन्न च मम ममता नाशमूलं किलैत-
न्नित्यं चित्ते ध्रियध्वं यदि जगदखिलं नाम मिथ्येति बुद्धिः ।
एतस्याहं ममैतद्यदि मनसि तदा जन्मकर्माद्रियध्वं
मन्यध्वं गर्भचर्मावृतिमभयपदं किंतु पुण्यं कुरुध्वम् ॥ ३८ ॥

मूकीभावो गरीयान्यदि गिरि भविता दोषवादः परेषां
किं वा स्वेषां गुणानामनुकथनमदो भूयसा गौरवेण ।
दृष्टे वा साधुवादस्खलनमधिगुणे स्वापकर्षे तथोक्ते
मित्रा मित्रोपकारा प्रकृतिविमुखता भूपतीनां सभासु ॥ ३९ ॥

धीरे का कोकिलानां प्रसवममतया या न लीढा कदाचि-
द्धूर्तानामेव मोहः शिशुकविधिवशाज्जायते वायसानाम् ।
एवं ज्ञात्वाभिमानं मनसि विजहतां जायते बुद्धिरेका
संसारक्षारवारांनिधिरपि मधुरो मुक्तिभाजां जनानाम् ॥ ४० ॥

कस्येदं सद्म मृत्योः किमिति कलकलो भीषणोऽसौ जनानां
शास्यन्ते पापवृत्त्या खलु धरणितलेनोपपन्नां किमेते ।
गङ्गानङ्गारिसङ्गात्स्खलदमलजलाकर्मकारुण्यपूर्णं
स्वाधीना यत्र जिह्वा गिरिपतितनया यानि नामानि यत्र ॥ ४१ ॥

यज्ञाज्जातात्समस्ताच्छतमखपदवी याज्ञिकादन्यतोऽमी
सिद्धे साध्ये कथंचित्तपसि तु रविता चन्द्रता चेत्तमोभिः ।
नाशङ्का यत्र कस्मादपि यदि पदवी कापि दूरेऽपि दृष्टा
तस्यामस्यां रमन्ते हृदि कृतपरमज्ञानतत्त्वा मुनीन्द्राः ॥ ४२ ॥

मा जायेरन्कदाचिज्जगति कृतधियो जातुचिज्जन्म दैवा-
द्यस्माद्विश्वोपकारो वितरतु भगवान्कर्म तत्सर्वसाक्षी ।

कर्माभावः कथंचित्स्फुरतु समुदितो यत्र जातेन भूयो
जन्यारम्भः कदाचित्परिचितपरमब्रह्मणोऽद्वैतबुद्धेः ॥ ४३ ॥

प्रीतिर्बन्धौ समृद्धे गतवति विपदं दुःखमेकान्ततो य-
त्तोषस्ते तावता चेत्तदमल भवता कानने सोऽनुभाव्यः ।
कार्यश्चित्तप्रमोदो मधुसमयवत्कोरकश्रीसमृद्धे
माद्यन्मातङ्गभग्ने विटपिनि नितरां दुर्विनेयो विषादः ॥ ४४ ॥

अन्तापत्संपदेषा परिणतिविरसाः कान्तयामी विलासा
आदावन्ते वियोगे परिचयमधुरे संगमे सज्जनानाम् ।
विद्यारब्धे प्रपन्नः स्वमतगुरुकथापक्षपातेऽभिमानो
वस्त्वेकं तत्किमास्ते परिचयसमये यस्य सर्वे समाः स्युः ॥ ४५ ॥

यद्यर्थे त्यागहेतौ न भवति विभवस्तस्य कुत्रोपयोगः
षड्वर्गादन्यतो वा विदधति च पदं कुत्र मासादयोऽपि ।
त्यागे तात्पर्यमस्य स्थितिरिति यदि तत्कोऽपि शान्तप्रकार-
स्तत्सर्वोपाधिशून्यैः शमविहगतरौ तत्समाधौ वसामः ॥ ४६ ॥

पुण्यारम्भेण सद्यःसुरपतिनगरस्यैव पन्थाः प्रकाशः
पापेनान्यः कृतान्तः प्रतिवसति मुखो ध्वान्तसंक्रान्तिघोरः ।
योऽयं पन्थास्तृतीयः कतिपयपुरुषप्रस्थितिक्षीणभावो
यात्रा तेन प्रयत्नादुभयपरिभवेनैव साध्या सुधीभिः ॥ ४७ ॥

किं क्लेशैस्तेऽपराद्धं वसतिरपि कथं द्वेषिणी मित्र जाता
किं पुत्रा वैरभाजा कुलजयुवतिभिर्नाशितं किं न ताभिः ।
यत्ते तां तामवस्थां चिरमिति गमिताः कानने काधिकाधी-
र्यावच्चित्तं न रक्तं परपुरुषपदाद्वैतरागेण तेन ॥ ४८ ॥

भूयो भूयस्तनुध्वं विधिमधिकधनं यज्ञवृत्तेः समन्ता-
त्सेवध्वं वा वनान्तं परिहृतविषमा बन्धुवर्गं विहाय ।
तीर्थे तीर्थेऽधिपर्व प्रयतत तपसो पोष्य धर्मे यतध्वं
यावच्चेतो न शान्तं सुखलवकणिका दुर्लभा तावदेव ॥ ४९ ॥

गाढे गर्भान्धकारे चिरमुषितमनुच्छ्वासमेकान्तदुःखे
तत्पाके भ्रश्यताधः कति कति शिशुतायातना नानुभूताः ।
अद्य त्वं पापचित्त भ्रमयसि यदि वा यौवने चेतसं मां
तत्तत्कर्मापराधादुपचितमसकृज्जन्मदुःखं सहस्व ॥ ५० ॥
सङ्गे गङ्गाशरय्वोर्नियमितमरुतोर्मन्त्रमावर्तयन्तः
कुर्वन्तो वा वनान्ते समिधमनुविधं बोधयन्तो हुताशम् ।
अभ्यस्यन्तस्तपस्यां पुरमथनपुरीसंनिधौ ध्यानमन्तः
सन्तो वा साधयन्तः परमपरिचयं वासरान्तं नयन्ति ॥ ५१ ॥
श्वासेनैकेन केचित्परिणतपवना मासमेकेऽप्यथैके
वर्षार्धं वर्षमन्ये क्षणमिव यमिनोऽभ्यासलेशान्नयन्ति ।
तस्मादभ्यासवश्यः पवनजयलयस्तेन चेतःस्थिरत्वं
तस्योपायेऽनपायो गुरुपदपदवीसेवनं कारणं स्यात् ॥ ५२ ॥
प्राणायामादिकर्मक्षपितदिननिशं निद्रया दूरमुक्तं
शब्दादिभ्योऽवधूतश्रवसुखकरणग्रामसिद्धावबोधम् ।
वेदान्ताद्वैतवादश्रवणमननतो लीनमिथ्यावभासं
पुंरत्नं यत्नसाध्या स्वयमिह वृणुते निर्मलाद्वैतसिद्धिः ॥ ५३ ॥
कार्पण्योत्पत्तिभूमिर्गुरुसुतसुहृदां वञ्चिकापण्ययोषि-
द्वाग्देवी दैन्यवाचां पररसमधुरस्वादलोलाग्रजिह्वा ।
चौर्यद्यूतद्रुबीजं नय पथि कतमो विभ्रमाम्बुप्रपातः
शीलापस्माररोगे विधिरकरुण का सिद्धये केह तृष्णा ॥ ५४ ॥
रम्भाहासोपहासस्त्रिदशपतिशचीसख्यसौख्यं च मुख्यं
पुण्यच्छेदे प्रमाणं तपति च रविता चन्द्रता जाड्यभूमिः ।
ताभ्यां येऽन्यत्क्रियेरन्गगनचरगणाः सन्तु ते चेति गोष्ठी
शिष्टानां यत्र तस्यामुपचितमतयः कर्मणा किं विदध्मः ॥ ५५ ॥
शीतांशूष्णीषमध्ये हरिणमिषमिलल्लीलवासः शिरस्त्रे
जातः कालो जरावांश्चिरसमयपुमान्विश्वकर्मैकसाक्षी ।

आकाशश्मश्रुमध्ये पलितकवलितं भास्वता साधकेन
छिन्नं सञ्जायमानं प्रसरति परितो रोमतारागणश्रीः ॥ ५६ ॥

अह्नि श्रान्तः समन्ताज्जनिमृतिगणितैर्जागरिप्यन्निशायां
प्रातः प्रारभ्यमौनव्रतगमितदिनान्भिक्षयन्घूकबन्धून् ।
सायं शेते कृतान्तो दिनकरशशभृल्लोचने मीलयित्वा
मौनव्याजेन विप्रा मुषितविधिममुं निन्दयन्ति स्वयं तम् ॥ ५७ ॥

सूक्ष्मं सूक्ष्मं विचिन्वन्नुचितमनुचितं कर्म जन्तोरनिद्रो
मन्ये वृद्धः कृतान्तो घनतिमिररुजाक्रान्तनेत्रप्रकाशः ।
एकं चक्षुर्निमील्याह्नि तु शशधरं पश्यति प्रेतजातं
रात्रावर्कं कथंचित्कलयति सकलं विश्ववस्तुप्रमोदात् ॥ ५८ ॥

भूयो भूयोऽपि पश्यन्भ्रुकुटिविषमितप्रेक्षणद्वन्द्वमारा-
त्सावज्ञं यान्तमग्रे समुदितविमलब्रह्मतत्त्वावबोधम् ।
तेजोभूम्ना यदस्या स्फुटदिदमधुना दृश्यतेऽन्तः सकार्चं
चन्द्रं प्रातर्द्वितीयं तदरुणमसकृज्जायते सूर्यनामा ॥ ५९ ॥

गर्वः कस्माद्धतास्ते रणभुवि रिपवः साधु के ते मनुष्या
धिग्धिक्कर्मैव तेषां क्षणविजयसुखं कर्म तादृक्तवापि ।
साधो कर्मैव किं तन्नियतिरिति यया सर्वमेतन्निबद्धं
तस्य च्छेदे किमस्त्रं परिचितिरमलब्रह्मणो मुक्तिहेतोः ॥ ६० ॥

कान्ता काचित्कुलीना सितसरसमुखी भीतिहेतुः पिशाची
पुत्रस्नेहोपगूढं दवदहनधिया दूरतो मोचनीयम् ।
बन्धुर्यत्रापदन्धुः सुहृदपि नितरां घातुको दस्युवर्गः
प्राप्तास्तत्रापवर्गाध्वनि पुनरधुना जन्मविच्छित्तिहेतौ ॥ ६१ ॥

पञ्चापीमे मदीयाः प्रतिजनि सहजाः पञ्चभूतानि तेभ्यो
दीयन्ते तद्विभज्य प्रतिभुवि मनसि प्रापितोऽसौ सुधांशुः ।
आत्मन्साक्षी त्वमेकः पुनरपि यदि मामाश्रयन्ते कदाचि-
त्कर्माकर्तुं क्षमोऽहं विषयपरिचयो नष्ट एव स्वभावात् ॥ ६२ ॥

कर्णावाकर्णयेतामुचितमनुचितं त्वक्स्पृशेच्चन्दनादी-
नीक्षेयातां नितान्तं परतरयुवतेश्चक्षुषी रूपजातम् ।
मिथ्यावादाद्गदेद्वा मृदुरसरसने नासिके जिघ्र गन्धा-
द्वन्दीमोक्षो भवद्भिर्मम कृपणपटोरद्य लब्धः कथंचित् ॥ ६३ ॥
विश्वज्ञानैकहेत्वोः प्रकृतिपुरुषयोः संगमे पञ्च पुत्रा
एकैकज्ञानभाजः कथमजनिषत प्रायशो बुद्धिमन्तः ।
सर्वेषां सर्वबोधः कथमपि भविता चेत्तदा विश्वभाजा-
मुन्मादः कुत्र माता विधिरपि बधिरो लोकवृत्तं तु शृण्वन् ॥६४
आरोहे दुर्गमायास्त्रिदशपतिपुरीदीर्घसोपानपङ्क्ते-
र्मध्ये धर्म स्वमंशं सपदि विदधतस्ते गुणानां सरामः ।
सद्यः सारम्भरम्भा स्मितलवकणिका लोलनेत्राञ्चलश्री-
रुद्धा बन्धुं भवन्तं कृशयति तदिमं मार्गमेव त्यजामः ॥ ६५ ॥
कर्माणि भ्रातरः किं स्वमनसि मलिनाः कारणं(?) धूयमादौ
युष्माभिः संस्कृतेऽस्मिन्वपुषि समुदयो ज्ञानबीजाङ्कुरस्य ।
गोभिः फालेन पुंसां प्रसभमभिहते भूमिभागे शरादौ
मिष्टः स्पष्टः समन्ताद्भवति हि नितरामिक्षुदण्डप्ररोहः ॥ ६६ ॥
द्वित्रेष्वेवावतारेष्ववहितमनसो मे भवन्तः सहाया
धर्माः कर्मोपचाराद्भवत नहि मृषा यावदाराधयामः ।
पादद्वन्द्वं गुरूणां हरचरणदुघैः(?) चित्तमारोपयाम-
स्तिष्ठामो वीतरागैरमरपुरधुनीनीरतीरे वसामः ॥ ६७ ॥
संसारक्षारसिन्धोरधरदलमिलत्ताम्रपर्णीतटान्तः-
प्रोन्मीलद्धासशुक्तिस्फुरदलघुरुचां दन्तमुक्तामणीनाम् ।
नास्माकं जातु लोभः क्वचिदमरधुनी पातुका तज्ज्वलित(?)
मे किं मोकं शरीरं सपदि कृतधियो मुक्तिमासादयामः ॥ ६८
प्राप्तो बन्धाय हेतुर्निरवयवविभोः कर्मलेशानुषङ्गो
दृष्टान्तो व्योम सिद्धं विशति कथमिदं गर्भमन्धान्धकारम् ।
व्यापारेणापि सिद्धः परगुणरचिते तान्यबन्धानुरोधो
जीवास्ये चापराधात्प्रकृतिरिह भवेत्कायसर्गे सहायः ॥ ६९ ॥

वीणावादेऽबलानां वचसि च तनु तं प्रेममादोषवादे
विश्लेषां रूपजातं परमुपचिनुतां रूपतोऽन्याङ्गनानाम् ।
मिष्टं यद्यत्र सत्यं विधिषु परिणतं ब्रूत किं वोऽपराधा-
दष्टानां वोऽपराधाज्जगति विचरतां नेह पारः कदाचित् ॥ ७० ॥

दारा जातोपकारा अजनिषत यतः प्रीतिभाराः कुमारा
वित्तानीतानि यूयं विविधविधिमुखे स्वोपयोगं चिरेण ।
मित्राणि प्रार्थये वः स्खलितमपि कदा मित्रकार्योन्मनो मे
कर्मच्छेदोद्यमाय क्षितिधरविवरे वासमीहामहेऽद्य ॥ ७१ ॥

अद्धा शुद्धा जरेयं यदनघचरणन्यासमात्रेण केशाः
सस्नेहा एव देहे स्फुटमलिनरुचो नाम जाता विशुद्धाः ।
अस्या एवेन्द्रियाणि ध्रुवमदमनया बोधितानि प्रसज्य
प्रायो नैवोत्सहन्ते क्षणमपि सहसोपासतेऽम्बामिव स्वाम् ॥ ७२ ॥

एकस्मिन्यस्य वासो नयवति चपला निश्चला यत्र नित्यं
क्षीणेनैकेन सख्या नियमयति रिपून्पञ्चपञ्चापि यश्च ।
स्थैर्यं येनाद्य नीतो रसयति न रसश्चन्द्रसूर्याध्वनीनो
ब्रूते काचित्कुमारी भवति स पुरुषो मां वृणीतां बलेन ॥ ७३ ॥

चाञ्चल्यं मुञ्च चेतस्त्वमणु ननु महद्भूयसे येन तत्त-
त्सर्वं कुर्वे न गर्वस्तव झटिति गतेः प्रीतिभागसि साधो ।
आस्ते कश्चित्प्रभुर्नस्तमिह न भगवानाप्तमेकान्ततस्त्वा-
मात्मानं चेन्न कुर्यात्पुनरपि विषयात्को निवर्तेत मूढः ॥ ७४ ॥

मुग्धत्वं शैशवीये प्रतिविशति पुनर्यौवनीयेऽभिलाषा
ये जाता भोगहेतोः प्रतिवसति ततो नर्तिता वानरीव ।
तत्रैते वार्धकीये प्रसरति विषयोऽसौ विषप्राय एव
प्रायोऽवस्थाधिकेयं व्यभिचरति मनोवाञ्छितं यत्र जातु ॥ ७५ ॥

विद्यारम्भो न दम्भो विधिरपि यजुषां नैव दम्भः कदाचि-
च्छ्वासस्तम्भो न दम्भो व्रतविधिनियमो नापि दम्भस्तपो वा ।

विज्ञाय ज्ञानदम्भो वितरणमधिकं नापि दम्भो धनानां
भावेनैकेन हीनं निखिलमिदमहो दम्भमुद्रां वहामः ॥ ७६ ॥
विज्ञा यज्ञेन वित्तव्ययमुषितमहाकोशजातेन पुण्यं
तीर्थे तीर्थे तपस्याक्षपितदिननिशं जायते यत्तु किंचित्।
कुर्वद्भिर्वोपवासान्व्रतमृतुषु नवं क्लेशतः पालयद्भि-
र्ध्यानेनैकेन सद्यः फलमधिकतरं जायते योगभाजाम् ॥ ७७ ॥
नो मौनं नापि दैन्यं न गुणगुणकथा नापि कन्था न पन्था
न त्यागो बान्धवानामनशनमपि न स्नानमेकान्ततो न।
मातर्मातर्वचो न क्षितितलशयनं नापि न(?) क्लीबता वा
वैराग्यं नाम बोधो यमदमकलनामात्रया स्वप्रकाशः ॥ ७८ ॥
साक्षात्कारोऽप्यणूनां प्रसरति पुरतो योगिनां यत्समाधा-
वन्तर्गामीति चक्षुस्तदिदमिह महो को न वेदप्रसिद्धम्।
पुंसोऽधीनो विहारः करणपरिकरस्येति सिद्धं न विघ्नः
पापे पत्यौ सहायाः कलुषमतिजुषस्तन्न मा निन्द जीव ॥ ७९ ॥
शब्दादानोपयोगं श्रवणमिदमहो तस्य लोकेऽपराधः
कोऽयं पापप्रवृत्तौ प्रभवति करणं नाम भोगाय पुंसः।
सुप्ते मत्ते प्रमत्ते जलरयपतिता याति नौः कर्णधारे
जात्यैवाचेतनायाः खलु कलुषलवः कोऽपि संभावनीयः ॥ ८० ॥
आकाशस्यात्मसिद्धेरपि रविशशिनोः पर्वते या नितान्तं
सायं प्रातः प्रकाशक्षतिरिह विदुषा कारणं चिन्तनीयम्।
जातो वातो यदस्माद्दहनसमुदयोऽभूत्ततोयास तस्मा(?)
त्ताभ्योऽभून्मेदिनीयं सदुरितपुरुषासङ्गिनी कर्म तस्याः ॥ ८१ ॥
अव्यक्तं नाम किंचित्प्रकृतिरिति महाञ्जायतेऽस्माच्च तस्मा-
ज्जातोऽहंकारनामा प्रकृतिमहदहंकारतः पञ्च तत्तत्।
तेभ्यः पञ्चेन्द्रियाणि त्रिगुणगुणलवप्राप्ततत्तद्गृहाणि
प्रायस्तैरेव भुङ्क्ते निजविषयरसं पूरुषः कर्मबद्धः ॥ ८२ ॥

माता वा मातुलो वा प्रभुरपि जनको बान्धवो वा सुहृद्वा
विद्याभ्यासे सतीर्थ्यस्तपसि सहचरा गेहिनी वा सुता वा ।
प्रेमस्थानानि तुल्या गुरुपदपदवीरेणुनानातु(?)नामी
यद्वाङ्मात्रेण दृष्टिर्भवति नवनवा ब्रह्मपर्यन्तमार्गा ॥ ८३ ॥
वेदाः शास्त्राणि गाथा मुनिभिरभिहितानीतिहासाः पुराणा-
न्यास्यश्वासप्रवृत्तेर्मलिनतररुचीनीतिनेहामहेद्या ।
यद्द्रष्टुं नैव कस्मादपि सहजशुचिस्फीतसारं विशुद्धं
तद्ब्रह्मप्रीतिहेतोरचललयलवप्राप्तबोधं भजामः ॥ ८४ ॥
गार्हस्थ्यं नाम धर्मो भवति यदि महान्बुद्धिरित्याद्रियध्वे
जातामेतां विवेकात्परिणयत सुखं शान्तिकामां कुमारीम् ।
देहे गेहे चरन्तो जनयत च सुतं ज्ञानमानन्दकन्दं
सद्यः संतोषयन्तो मरुदतिथिवरात्पञ्चपञ्चाध्वनीनान् ॥ ८५ ॥
निर्वाणं गन्तुकामस्त्वमसि यदि तदा मुञ्च कर्माणि दूरा-
देकं तद्ब्रह्म चित्ते कुरु सपदि महामोहसंदोहहारि ।
बोधे यस्यास्य सद्यो विषयविषधरो नैति पार्श्वे कदाचि-
न्नैवं नैव प्रभावं प्रकटयति निजं सत्कृतं दुष्कृतं च ॥ ८६ ॥
चक्षुः किंचिद्विवक्षु त्वमसि न विदितं कैतवं जीवबन्धो-
र्जीवस्यैतस्य गर्भे दुरितमनुभवन्मोचितोऽसौ मयैव ।
केनोपायेन साधो विषयसुखभरात्त्वं निवार्य प्रयत्ना-
दन्तर्गामीह भूत्वा सममपि मनसा ब्रह्म दृष्टं कदाचित् ॥ ८७ ॥
शब्दातीतं यदन्तः किमपि न विषयः स्पर्शनस्यापि कश्चि-
न्निर्गन्धेनैव नासा प्रभवति रसनास्वादहीने किमर्था ।
अन्तर्गामीह भूत्वा तदमलममलानन्दसंदोहहेतुं
पश्यामि ब्रह्मजिह्मेतरमुदितभवस्वादवैरस्यमञ्चत् ॥ ८८ ॥
योगश्चेतोनिरोधे परिचितपरमब्रह्मकर्मेति मन्ये
तस्योपायाः कियन्तो यमनियममुखान्यष्ट ते वर्णनीयाः ।
येषामभ्यासयोगे समुदयति शमश्चेतसः स्यात्स्थिरत्वं
साक्षात्कारः समाधौ प्रभवति विमलब्रह्मणोऽद्वैतसिद्धेः ॥ ८९ ॥

आत्मन्यध्यात्मयोगो मुनिभिरभिहितः स्वानुभूतश्चिरेण
ख्यातः केनाधुनायं बहिरपि न भवेद्यत्प्रपञ्चः समस्तः।
साक्षात्कारो ह्यमुष्य प्रथयति सकलं विश्वजातं हि मिथ्या
चक्षुश्चेदन्तरात्मन्यवहितमनिशं क्षोदमात्राश्रयेण॥ ९०॥
देशे सक्तो विविक्ते भयविकृतरुषां हेतुरिक्तेति रिक्ते
नात्यन्तं शीतभाजि प्रतपनरहिते चोच्चशब्दादिवर्जे।
अस्मिन्नास्तीर्यवर्यं पृषदजिनमलं कोमलं वा विकार्यं(?)
कौशेयं वान्वगाहि प्रचुरशुचिगुणं चासनं कल्पनीयम्॥ ९१॥
कृत्वा पद्मासनाख्यं दृढमधिकलयं नातिदीर्घोर्ध्वकायः
कम्पं निर्जित्य तन्वा स्थिरतरनयनो नासिकाग्रे निमीलन्।
पाणावुत्तानसंस्थे करतलमपरं धार्यमुत्तानमेव
ज्ञेयं योगाङ्गमाद्यं प्रभवति न यतो व्याधिरालस्यमस्मात्॥ ९२॥
सिद्धानामासनानि श्रममदमदनव्याधिबाधोद्धुराणि
यानि ख्यातानि तेषामपि च परिचयः सेवनीयः प्रयत्नात्।
तस्माच्चेतःस्थिरत्वं भवति च मरुतः साध्यमार्गप्रवेशो
नालस्यस्योदयः स्यादिति हठयतिनामेकतो वल्लभः स्यात्॥ ९३॥
अभ्यासेनासनानां प्रतिदिवसमथालस्यमौत्सुक्यमन्त-
र्जित्वा निद्रां च योगी गुरुचरणरजश्चिन्तयन्स्वस्थचित्तः।
प्राणायामं विदध्यात्बहिरभिसुरते मारुतानेकनासा-
रन्ध्रेणापीय तूष्णीं धमनिमुपचितां पूरयेन्निस्तरङ्गः॥ ९४॥
कर्मैतत्पूरकाख्यं तदनु वितनुते कुम्भकं नीतमन्त-
र्वायुं नाड्यां निरुद्धं समयगणनया तुल्यया पूरकेण।
नासारन्ध्रेण भूयस्त्यजति च मरुतः कुम्भितानल्पवेगा-
न्मात्रास्मिन्पूरकस्य प्रभवति नियतं रेचकं कर्म चैतत्॥ ९५॥
मात्रैकोङ्कारपाठैर्द्विरधिकदशभिस्तादृशो द्वादश स्यु-
र्मात्राश्चेत्सिद्धमेतत्प्रणवजपविधिस्तत्परं निर्जयोऽपि।

प्राणायामो विधेयो जपविधिविरहादेष सिद्धो जपाख्यः
स्यादेतन्न द्वितीयं क्रमकथनतया प्राणसंरोधनामा ॥ ९६ ॥
चान्द्री नाडी दिने चेदुदयति रजनी स्यात्तदा योगमार्गे
भानोर्नाडी निशायां भवति दिनमिदं संधिरेतन्ममत्वम् ।
सूर्येणापूर्य सम्यग्ध्रुवमिह शशिना रेचयेज्ज्ञातशातः
संकेतोऽयं मुनीनां पवनविधिपुषामेतदर्थं विचारः ॥ ९७ ॥
प्रत्याहारं तृतीयं वपुरमिदधति ज्ञानिनो रिच्यमानं
कुम्भीभूतं समीरं प्रणयगणनया तुल्यमापूरकेण ।
नीतं नासापुटेन प्रथममुपचितं येन चान्येन तस्मा-
न्मन्दं मन्दं विहेयं स्थिरतरमनसा योगिना ध्यानयोगात् ॥ ९८ ॥
येनोपायेन वायुः प्रविशति यमिनः पश्चिमे मार्गसंधौ
तत्राधेयः प्रयत्नः पथि पथि विमले तत्र तत्र क्रमेण ।
क्रामन्बिन्दुस्थलीनां सपदि परिसरं वायुरेकान्तसुस्थः
स्वादुं बिन्दुं सुधाया वपुषि च सकले सेचयन्स्थैर्यमेति ॥ ९९ ॥
योगस्याङ्गं चतुर्थं वदति बुधजनो धारणेति प्रसिद्धं
यस्यामस्यामिलाया वदनपरिगतं नीतमन्तः समीरम् ।
भूयो जातं सुषन्नो(खं नो) दरवरकुहरे निस्तरंगं स्थिरं च
मात्रायोगेन मुञ्चेद्वपुषि च सकले जायते शून्यतापि ॥ १०० ॥
ध्यानासक्तः स्थिरास्यः कियदशनकृताहारतोषस्तपस्वी
जित्वा सर्वेन्द्रियाणि प्रसभमुपगतः खेचरत्वं प्रसिद्धः ।
सिद्धिर्वाचामनी वा स्फुरति च परितो जातसंतोषपोषो
निर्दोषः पूरुषः स्यादिति नियततया धारणा कर्मणीह ॥ १०१ ॥
लीनं स्वात्मानमात्मन्यवहितमनसा चक्षुषा चान्तरेण
भिन्नं ध्यानेन कृत्वा कलयति लयतो निर्विशेषात्मवृत्तिः ।
मूर्च्छारूपं लयं यद्व्रजति बुधजनो मीलिताक्षो विनिद्रो
मात्रां द्वित्रि(?)प्रपन्नां स्थिरपवनगतिः शश्वदभ्यासयोगात् ॥ १०२ ॥

नुञ्चेच्चेतश्चलत्वं नयनपथबहिर्भूतमर्थं च पश्ये-
ज्जानीयाद्दूरतोऽपि श्रुतिपथरहितं शब्दमाकर्णयेच्च ।
निर्णेतुं भावि वस्तु प्रभवति निजया जातया ज्ञानबुध्या
यत्रेदं ध्यानमङ्गं तदिदमुपगतं योगिनो मुक्तिसिध्योः ॥ १०३ ॥
आकाशस्येह मध्ये खगसदृशमनुस्यूतमाकारभावं
नीरूपं वस्तु किंचित्कलयति मनसा रूपवच्चेति मत्वा ।
चिन्तातीतो न शून्यो वियदिह विहगाकारमाधारमात्रं
सत्येनासौ समाधौ रचयति परमान्भौतिकाणून्परेव ॥ १०४ ॥
मन्दं मन्दं यदन्ता रचयति वपुषो मध्यमक्षिप्रपन्नं
रुद्ध्वा द्वाराणि सर्वाण्यपि नवगणितान्यादृतो ध्यानमार्गे ।
निष्कम्पा तालुमूले स्थिरयति रसनां चक्षुषी मीलयित्वा
पीयूषं स्वादु सद्यो रसयति गलितं दन्ततो लग्नदन्तः ॥ १०५ ॥
नोत्पत्तिः स्याज्जराया मरणमपि भवेद्दूरतोऽस्मान्नराणां
नाहंकारो न रोषः सकलजनहितः सत्त्वसंतुष्टचित्तः ।
वायोरभ्यासलीने यमविधिषु रते योगवित्सिद्धबुद्धिः
सिद्धिं निर्वाणमार्गप्रचरणमृदुताकारणानीक्ष्यमाणः ॥ १०६ ॥
कर्मण्यध्यात्मसंज्ञे समुदितविषयावज्ञया चित्तवृत्ते-
रौत्सुक्ये चापनीते व्यवहितविगलन्निद्रया जागरूकः ।
अत्यन्तं नाशकासवतिन(?) निरशनश्चित्तजाग्रन्न यस्यै
दीर्घायुः पूरुषः स्यादिति नियमविधौ दत्तनित्यावधानः ॥ १०७ ॥
इत्यङ्गेषु स्थिरेषु प्रभवदुरुशमः क्षीणसर्वापराधः
श्रावं श्रावं गुरुभ्यो वहु(?)मुपनिषदं ब्रह्म निर्णीय सम्यक् ।
कृत्वा साक्षादशेषं जगदपि लयतो लीयमानं तदन्त-
र्योगी संसारसारं फलमनुभवति प्राप्तब्रह्मैकरूपः ॥ १०८ ॥

इति तपःसिद्धतरखरतराम्नायसोनवंशावतंसश्रीमालकुलतिलकसंघपालश्रीमद्देहडात्मजविविधबिरुदराजीविराजमानसंघपतिश्रीधनदराजविरचिते शतकत्रये वैराग्यधनदाभिधानं तृतीयं शतकं समाप्तम् ।

---

## गिरिधरविरचितं
## गञ्जीफाखेलनम् ।

गिरो वरोऽसौ कवितां स्वपद्यैरितीरयत्यल्पितकष्टभारा ।
धर्मस्य बाला तवकस्त्वनेन रसोद्गमः श्रीपरितोषणाय ॥ १ ॥

गञ्जीफाभिधखेलनं तु दिवसे सूर्यान्निशीन्दोर्भवे-
त्पत्राण्येककजातिजानि रविसंख्यान्याढ्यचित्राणि च ।
तज्जात्यष्टकमेवमग्रगदितं नामात्र यन्मोहरे-
त्यर्केशं किल रूपसंज्ञमिति यत्स्यात्तत्तु चन्द्रेश्वरम् ॥ २ ॥

चतुर्भिर्वा विद्भिस्त्रिभिरथ च खेलक्रमविधिः
सुखार्थं चित्तस्य क्रियत इह कालक्रमणकृत् ।
कथं कार्यः सोऽपि प्रथममथ पत्राणि सकला-
न्यधश्चित्राण्यत्र त्यजतु स तु कश्चिन्नरवरः ॥ ३ ॥

एकत्र पत्राणि करोतु कश्चिन्नरोऽनुमानादपरोऽत्र भागम् ।
शेषं च भागं च तदग्रमर्त्यो विभज्य दत्ते निजदक्षमर्त्यात् ॥ ४ ॥

यथा च—

चित्रं त्वेकत एव पत्रनिकरे पत्राण्यधश्चित्रिता-
न्यज्ञात्वैव यथातथं मुहुरितश्चत्वारि तेभ्यो ददौ ।
चत्वारो यदि मानवा जिनमितानि स्युस्तदाथ त्रय-
श्चेत्स्युर्दन्तमितानि च प्रतिनरं पत्राणि सर्वत्र च ॥ ५ ॥

अथ पत्रविभागकर्तुर्नरस्य प्रशंसामाह—

सर्वत्र भागं समतां नयंस्त्वं प्रयासि चोच्चं पदमत्र मित्र ।
एवं तुलादण्डविवेकमेकस्त्वमेव धन्यः कुरुषे युगेऽस्मिन् ॥ ६ ॥

रजनीदिनयोर्दिवाकरः समभागो तुलयापि संगतः ।
रजनीमनुरञ्जयत्यतः किल नीचत्वमगाद्विभाकरः ॥ ७ ॥

अथ खेलः—

दिनेऽर्के परं पत्रमेकं गृहीत्वा प्रयातीन्दुरेवं निशि प्रायशोऽत्र ।
महान्तो यतो यत्र कुत्रापि कार्ये कमप्येकमादाय गच्छन्ति चान्यम् ॥ ८ ॥

आयाताय नृपाय पत्रमपरे चिक्रीडितारः पृथ-
ग्दत्त्वा स्वीयजयाख्यपत्रनिकराद्यन्निन्द्यदूराश्रयम्।
क्रीडन्त्यत्र नृपप्रयाणसमयादूर्ध्वं तु तन्मन्त्रिणे
दत्त्वाग्रे क्रमतः पृथक्पृथगमी क्रीडन्ति निन्दन्ति च ॥ ९ ॥

तत्र क्रमः—

एकतः क्रमगता जयकर्त्र्यश्वगमोहरकुमाचवराताः।
उत्क्रमं दशयुताज्जयपत्रात्ताजरूपसमसेरगुलामाः ॥ १० ॥

नृपतिः प्रथमं ततोऽस्य मन्त्री क्रमतः खेलति सर्वदत्तपत्रैः।
इति तन्निजजातिपत्रयूथक्रमखेलोऽत्र मया विचार्य चोक्तः ॥ ११ ॥

भ्रमान्मन्त्री क्रीडितश्चेद्भूपात्प्रागेव भूपतिः।
तदानीं च त्वमायाति तथा सर्वत्र कल्पना ॥ १२ ॥

स्ववामगो यः स नरोत्तमः स्याद्दक्षे नरो हीनबलः स उक्तः।
नरोत्तमक्रीडनयोग्यकालात्स्वक्रीडनस्यावसरो यतोऽस्ति ॥ १३ ॥

नरोत्तमेनार्पितखेलपत्रे विधिर्यथोक्तः खलु खेलनस्य।
स हीनवीर्यार्पितखेलपत्रे पत्रद्वयस्यापि भवेत्कदाचित् ॥ १४ ॥

निजखेलमनुसरन्क्रमादुपपत्रेष्वखिलेषु दत्तदृक्।
मतिमान्सुविचार्य सर्वतोऽधिकजेता भवति स्वपत्रतः ॥ १५ ॥

स्वसंनिधौ यस्य नृपस्य मन्त्री परत्र भूपो यदि को विधिः स्यात्।
स मन्त्रिमर्त्येन नृपस्य जात्या पत्रं तदा निःसरणाय देयम् ॥ १६ ॥

पूर्वपत्रविनिःसृत्यैर्जितपत्रगणाद्दलम्।
जात्या नेयं यतस्तत्र त्यक्त्वा निन्द्यं दलं निजम् ॥ १७ ॥

एवं स्वपत्रादिमपत्रमेकं निष्कास्यतेऽत्र द्वितयं तथा न।
खेलक्रमादष्ट दलानि यावदिहावशिष्यन्ति विधिस्तु तावत् ॥ १८ ॥

निष्कासने चेत्स्वसमीपपत्रमेकं तु तात्कालिकखेलयोग्यम्।
वर्तेत तर्ह्येवमसौ विधिः स्यान्नो चेत्तदा याचितपत्रदानम् ॥ १९ ॥

अत्रोदाहरणम्—

चङ्गेश्वरायार्पितपत्रमेकं नवाङ्कितं यत्सविधेऽस्य भूपः ।
तस्योपपत्रेषु नवाङ्कपत्रादल्पानि यद्यादिदलात्क्रमेण ॥ २० ॥
स्युस्तर्हि तत्रान्तिममेकपत्रमादाय चङ्गेश्वरयानमेव ।
देयं तदान्यद्दलमीश्वराय सर्वैः सदायं विधिरूहनीयः ॥ २१ ॥
चन्द्रादिभूपेष्वियमेव रीतिः परं तु पत्रे विधिरन्यथोक्तः ।
पञ्चाङ्कपत्रे तु षडङ्कपत्रं निष्कास्यते व्युत्क्रमतो यतोऽदः ॥ २२ ॥

अथ याचकस्वरूपम्—

शान्तो दान्तः प्रगल्भश्च गौरः कमललोचनः ।
संमुखो दक्षिणस्थश्च सोऽत्र याचक ईरितः ॥ २३ ॥

अथ दानविधिः—

सर्वाण्येकत्र पत्राणि कृत्वा तानि सुगोप्य च ।
संस्थाप्य याचकाग्रेऽपि याचयेति वदेत्ततः ॥ २४ ॥
अष्टाधिकदलेष्वाद्यमन्तिमं च न दीयते ।
यावत्संख्य याचकोक्तं विगणय्य तथा दलम् ॥ २५ ॥
त्यजेत्तस्याधिकारो यस्तेन पत्रं तु नीयते ।
चेदष्टाल्पदलानि स्युस्तदाद्यन्तेऽपि दीयताम् ॥ २६ ॥
याचनात्पत्रमायातं तत्र पत्रद्वयस्य न ।
खेलो भवेदितीदं तु जानन्त्येव मनीषिणः ॥ २७ ॥

अथोपसंहारः—

यावनी पावनी भाषा न हि चेन्नोच्यतामिति ।
गर्हितात्पङ्कतो जातं पङ्कजं कथमादृतम् ॥ २८ ॥
वदेन्नानृतमित्येषा श्रुतिस्तर्हि कथं नराः ।
वदन्ति व्यवहारार्थमसत्यं तद्वदत्र च ॥ २९ ॥
न दोषः सकले वाक्ये येनान्ते सुखमेधते ।
इति चेत्क्रीडनं तुष्ट्यै किं नातोऽदः सुखावहम् ॥ ३० ॥

ज्योतिर्विच्छिवसूनुशंकरसुतो गीर्वाणसद्भाषया
चित्तालस्यनिवारणाय विदुषां बालैरपि प्रार्थिताम्।
गञ्जीफाभिधखेलनक्रमविधेः पद्यामनिन्द्यामिमां
पद्यैः सद्गुणकाग्रणीर्गिरिधरः पूर्णां चकार स्फुटाम् ॥ ३१ ॥

इति गञ्जीफाखेलनम्।

---

## तैलङ्गव्रजनाथविरचितं

# मनोदूतम्।

(सहृदयहृदयाह्लादनापरनामकम्।)

सटीकम्[1]।

ब्रह्मादिदेवतावृन्दवन्दनीयपदाम्बुजः।
दूरीकरोतु हृदयजाड्यं मे नन्दनन्दनः॥
जयन्ति श्रीगुरोः पादनखचन्द्रमरीचयः।
निर्हत्य तमो गाढं स्वान्तं मे विशदीकृतम्॥
इयं कृते मनोदूतकाव्ये भव्ये समासतः।
व्याख्या बालावबोधाय क्रियते मञ्जुभाषिणी॥
भूयोभूयः प्रणम्याहं याचे बद्धाञ्जलिर्बुधान्।
बालभाषितमित्येव क्षमध्वं चापलं मम॥

अथ 'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये। सद्यः परनिर्वृतये कान्तासंमिततयोपदेशयुजे॥' इत्याद्युक्तं काव्यफलं पश्यन्सहृदयहृदयाह्लादकैरद्भुतकरुणशान्तरसप्रधानैः सहृदयानां भगवद्भक्तिरसिकानां मनसि सद्यः सहजानन्दसमुल्लासप्रवणं मनोदूताख्यं काव्यं चिकीर्षुस्तस्य निर्विघ्नसमाप्तये शिष्टाचारपरिप्राप्तं स्वेष्टदेवतास्मरणगर्भं वस्तुनिर्देशात्मकमाशीर्वादात्मकं च मङ्गलमुपनिबध्नाति—

दधद्वासः पीतं सजलजलदश्यामलरुचि-
र्मुदा पूर्णां कुर्वन्नधरसुधया सन्मुरलिकाम्।

---

१. इदं हि सटीकं काव्यमनेन **तैलङ्गव्रजनाथा**भिधेयेन १८१४ (A. D. 1758) वैक्रमवत्सरे श्रीवृन्दाटव्यां निर्मितमिति ग्रन्थसमाप्तिश्लोकतोऽवगम्यते. पुस्तकं चास्य ग्रन्थस्यैकमेव २७ पत्रात्मकं **राजगुरुवरश्रीदत्तभट्टानां** सरस्वतीसदनत आसादितम्, अतस्तेषामुपकारं शिरसा बिभृमः.

समन्तादाभीरीजनपरिवृतो भानुतनया-
तटान्तःसंचारी मम हरतु हारी हरिरघम् ॥ १ ॥

**दधदिति** । अत्र वासःपदेन द्रौपदीवस्त्रदानसामर्थ्यम्, मुदा पूर्णामिति द्रौपद्या आनन्दपूर्तिदातृत्वं च व्यज्यते । तेन च मुद्रालंकारेण समासोक्तिर्व्यज्यते । 'सूच्यार्थसूचनं मुद्रा प्रकृतार्थपरैः पदैः' इति 'समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य च' इति, तेनालंकारेणालंकारध्वनिः । तेनास्योत्तमकाव्यत्वम् । 'इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः कथितः' इति । शिखरिणीवृत्तम्—'रसै रुद्रैश्छिन्ना यमनसभलागः शिखरिणी' इति । दधदिति च पदं धारणपोषणरूपमङ्गलसूचकम् ॥

पुनरपि विघ्नबाहुल्यशङ्कया तन्निरासायाशीर्वादरूपं मङ्गलमुपनिबध्नाति—

श्रुतिप्रोक्तैः सूक्तैर्मुखरितमुखैर्नारदमुखै-
र्मुनीन्द्रैर्निस्तन्द्रैर्निटिलतटबद्धाञ्जलिपुटैः ।
कृतस्तोत्रो वित्रासितसकलसुत्रामविमतो
जगत्त्राता धाता द्रुतमभिमतानि प्रदिशतु ॥ २ ॥

**श्रुतिप्रोक्तैरिति** । मुखरितमुखैर्नारदो मुखेऽग्रे येषां तैर्मुनीन्द्रैः निटिलतटे ललाटतटे बद्धाञ्जलिपुटैः कर्तृभिः श्रुतिप्रोक्तैः सूक्तैः करणभूतैः कृत्वा कृतं स्तोत्रं यस्य । 'स्तवः स्तोत्रं नुतिः स्तुतिः' इत्यमरः । वित्रासिताः सकलाः सुत्राम्ण इन्द्रस्य विमताः शत्रवो येन । 'सुत्रामा गोत्रभिद्वज्री' इत्यमरः । 'विमतारातिदुर्हृदः' इति केशवः । सोऽभिमतान्यभीष्टानि प्रदिशतु । 'दिश अतिसर्जने' ॥

हरिद्राभद्राभाद्भुतवसनभृद्राघवविभु-
र्महेन्द्राद्याराध्यः सुरविमतकृद्रावणरिपुः ।
द्युचन्द्रातन्द्राभाधिकवदनमुद्राभिलसितः
स तन्द्रानिद्रां मे दलयतु फणीन्द्राधिशयनः ॥ ३ ॥

**हरिद्रेति** । हरिद्रया भद्रा या आभा तद्वदद्भुतं वसनं बिभर्तीति तथा । सुराणां विमतकृद्विरोधकारी यो रावणस्तस्य रिपुः । द्युचन्द्रस्य प्रसिद्धगगनचन्द्रस्य या अतन्द्रा पूर्णा आभा ततोऽप्यधिका या वदनमुद्रा मुखशोभा तयाभिलसितः शोभितः । स्पष्टमन्यत् ॥

नमस्कारात्मकं मङ्गलमाह—

सभामानीतामाकुलहृदमवामार्जुनवधू-
मकामामुद्दामाधिकजनितभामारिकलिताम् ।
सुसामाभिप्रीतो दुरितहरभामा स दयते
प्रणामानां पात्रं स भवतु सुदामाभिमतदः ॥ ४ ॥

**सभामिति** । सभां प्रति आनीताम् । अत एवाकुलं हृद्यस्यास्ताम् । अवामां ऋज्वीम् । 'वामः सुन्दरवक्रयोः' । अकामामनिच्छन्तीम् । उद्दामाश्च ते अधिकं जनितो भामः क्रोधो येषां तैररिभिः कलितां पीडितां यो दयते स्म । 'करुणायां तु दयतेऽनुगृह्णात्यात्मनेऽपि च' इति आख्यातकोशः ॥

अत्र वक्ष्यमाणकथायां द्रौपद्या भगवच्छरणगमनस्य कथनीयत्वात्स्वस्यापि तच्छरणत्वमाह—

गृहापत्यस्वात्मस्वजनमयपाशैः परिवृते
ह्यनन्धोऽप्यन्धोऽहं बत निपतितोऽन्धौ स्रुतिमये ।
न चान्यं स्वोद्धारे कमपि परिपश्यन्विधिमहो
दयासिन्धुं बन्धुं निखिलजगतस्त्वामुपसृतः ॥ ५ ॥

**गृहापत्येति** । गृहाः स्त्री । आत्मा देहः । 'आत्मा चित्ते धृतौ यत्ने धिषणायां कलेवरे' इति विश्वः । स्वजना बन्धवः । अन्धौ कूपे । 'पुंस्येवान्धुः प्रही कूपः' इत्यमरः । विधिं प्रकारम् । 'जाया जनी गृहा दाराः पुंभूम्नि दयिता च सा' इति महीपः ॥

अदान्तः सच्छुद्धिः श्रुतिसमुदितैः साधनगणै-
र्विहीनः पात्रं न त्वमसि कथमप्युद्धृतिविधेः ।
त्वयेत्थं नो वाच्यं कथमपि गजाजामिलमुख-
प्रवृत्त्या विश्वासः समजनि दृढो मे यदुमणे ॥ ६ ॥

**अदान्त इति** । गजाजामिलौ मुखे येषां तेषां प्रवृत्त्या वृत्तान्तेन । 'वार्ता प्रवृत्तिर्वृत्तान्तः' इत्यमरः । स्पष्टमन्यत् ॥

शरण्यश्च जगति त्वमेव नान्य इत्यत्रोदाहरणमाह—

पुरा पापासक्तैः शकुनिरविपुत्रान्धतनयै-
र्बलाद्द्यूते जित्वा कुरुसदसि कृष्टा द्रुपदजा ।
कृपापारावारं श्रुतिहृदयहारं त्रिजगता-
मुदारं त्वां हित्वा कथय शरणं कं गतवती ॥ ७ ॥

**पुरेति** । कुरुसदसि कृष्टा आकृष्टा । त्रिजगतामिति निर्धारणे षष्ठी । उदारं महान्तम् । 'उदारो दातृमहतोः' इति विश्वः ॥

तस्यैव श्रीभगवतो माहात्म्यैकदेशं कविर्वर्णयति—

यदा त्वत्साहाय्यादखिलहरितां पाण्डुतनयै-
र्जयो लब्धो भीमादिभिरमरदुष्प्राप इह तैः ।
तदारब्धे यज्ञे नृपविजयहेतौ नृपतिना
ध्रुवं सर्वा संपद्धरणितलगा तत्र ददृशे ॥ ८ ॥

**यदेति** । हरितां दिशाम् ॥

अथ राजसूयावभृथसमयशोभां पाण्डवदिग्विजयं मयकृताद्भुतसभाशोभातिशयं युधिष्ठिरमहाभाग्यं भगवत्साहाय्यं च दृष्ट्वा संतप्तेन दुर्योधनेन च्छलद्यूतेन पाण्डवान्निर्जित्य सभायां द्रौपदीमानाय्य कष्टं प्रापयित्वा धर्मपरान्पाण्डवान्पीडयतातिदुर्नय आरब्ध इति भगवता तेषां कष्टं परिहृतमिति राजसूयादारभ्य कविः कथां प्रस्तौति—

ततो यज्ञस्यान्ते ह्यवभृथदिने त्वं स्वमहिषी-
समेतो द्रौपद्याः स्वपतिसहिताया अनुसरः ।
धरासंस्थैर्दृष्टः स्तिमितनयनैः कौतुकभरा-
त्पृथापुत्रस्याज्ञापर इव जनैर्विष्टपपते ॥ ९ ॥

**तत इति** । स्पष्टम् ॥

त्वया त्रातेनाग्नेर्दितितनयतक्ष्णाभिरचितां
सभां दिव्यामिन्द्रज्वलनवरुणैरप्यसुलभाम् ।
मणिस्तम्भोपेतामनलदिनरत्नाधिकरुचिं
पृथापुत्रो लेभे तदिह किल हेतुस्तव दया ॥ १० ॥

**त्वयेति** । अग्नेः खाण्डवदवाग्नेः सकाशात्त्वया त्रातेन रक्षितेन दितितनयतक्ष्णा विनयेन । 'तक्षा त्वक्षाथ वार्धकिः' इति रभसः । दिनरत्नं सूर्यः ॥

तत्र षड्भिः सभां वर्णयन्दुर्योधनस्यानुतापमाह—

कदाचिद्गान्धारीतनयशतमुख्यो हृदि वह-
न्महात्मानं द्रष्टुं मयविरचितामद्भुतसभाम् ।
विवेश क्रोधेष्य्यनिलदवथुदूनः करतले-
ऽसिधेनुं बिभ्राणः शकुनिसहजाभ्यामनुगतः ॥ ११ ॥

**कदाचिदिति** । शतमुख्य इति । ज्येष्ठ इत्यर्थः । दवथुः संतापस्तेन दून उपतप्तः । असिधेनुश्छुरिका । 'छुरिका चासिधेनुका' इत्यमरः । 'कटारी' इति भाषायाम् ॥

मणीनां ज्योत्स्नाभिश्छुरितविवरे द्वारि निविश-
न्दृढं भित्तिभ्रान्त्यां भ्रमितमतिरासीत्कुरुपतिः ।
अथो रत्नज्योतिर्विवृतविवरद्वारसदृशे
प्रदेशे संजातः पृथुतरशिरोघातविवशः ॥ १२ ॥

**मणीनामिति** । ज्योत्स्नाभिः कान्तिभिः । 'ज्योत्स्ना चन्द्रप्रभा कान्तिः शुक्लपक्षनिशासु च' इति हैमः । छुरितं मिश्रितं विवरमवकाशो यस्य तादृशे द्वारि । अथो रत्नज्योतिर्भिर्विवृतं उद्धाटितं विवरमवकाशो यस्य तादृशे ॥

स्थले चासीद्गाढं गरुडमणिसत्खण्डरचिते
जलभ्रान्त्यां मूढो निजवसनसंकोचनपरः ।
सनीरे राजीवादिभिरुपचितेऽत्रापि सरसि
स्खलन्मग्नः सोऽभूत्स्फटिकनिचिताश्मस्थलधिया ॥ १३ ॥

**स्थलेति** । गाढमत्यन्तम् । स्फटिकैर्निचिताः खचिता ये अश्मानः । नीलाश्मान इत्यर्थः । नीलमणिकुट्टिमेषु स्फटिकशकलखचितत्वाद्भ्रान्तिर्जातेत्यर्थः ॥

प्रदेशे कस्मिंश्चित्स्फटिकरचिते रत्ननिकरैः
परीते चातुर्योन्मयविरचिताद्विभ्रमकरे ।
व्रजन्मन्दं मन्दं ह्यररपिहितं द्वारमिति त-
द्दृढभ्रान्त्या दोर्भ्यां विघटनपरोऽभून्निपतितः ॥ १४ ॥

**प्रदेश इति** । रत्नानां निकरैः समूहैः परीते व्याप्ते । 'समूहनिकरव्यूह-' इत्यमरः । अरराभ्यां कपाटाभ्यां पिहितं दत्तकपाटमिति भ्रान्त्या विघटनं कपाटोद्घाटनं तत्परः सन् निपतितोऽभूत् । 'कपाटमररं तुल्ये' इत्यमरः ॥

अयं वृक्षावासः श्रम इह मया नोद्य इति च
प्रयातोऽपि स्वैरं न खलु गतवानन्तमलसः ।
पुरः पश्यन्पश्चान्मणिनिचयकान्त्यावनमति-
भ्रमंस्तत्याजासौ मनसि भृशरूढं जडमतिः ॥ १५ ॥

**अयमिति** । वृक्षावासो ह्युपवनम् । 'आरामः कृत्रिमं वनम्' इति शाश्वतः । इह मया श्रमो नोद्यः परिहरणीय इति स्वैरं प्रयातोऽप्यन्तं अवसानं न गतवान् । नानाविधमणिकिरणाङ्कुरसमुद्भूतया किसलयप्रसूनफलाढ्यलतातरुभ्रान्त्या वाटिकाभ्रमेण सर्वत्र मणिमयस्थले गच्छन्भ्रान्तोऽभूदिति भावः ॥

क्वचिद्रक्ताम्भोजप्रकरखचितैर्गारुडमणि-
प्रभाभिः क्वाप्यच्छस्फटिककिरणैः श्वेतकमला ।
क्वचिन्नीलै रत्नैरसितनलिनेवातिललिता
विचित्रा सा दृष्टा नृपतितनयेनाद्भुतसभा ॥ १६ ॥

**क्वचिदिति** । तत्र स्फटिकमणिकुट्टिमेषु नीलमणिकुट्टिमेषु वा खचितैः पद्मरागकुरुविन्दशकलै रक्तकमलभ्रान्तिः नीलमणिकुट्टिमेषु खचितैः स्फटिकहीरकखण्डैः श्वेतपद्मभ्रान्तिः स्फटिककुट्टिमेषु नीलकमलभ्रान्तिरिति ज्ञेयम् ॥

इति प्रायोनानाविधपरिभवोद्भ्रान्तहृदयः
सवैलक्ष्यो दुःखात्किमपि च विधातुं न निपुणः ।
स भीमेनाक्षिप्तः परिकलितहास्येन सुभृशं
निवृत्तः संतापं हृदि दधदसाधारणमहो ॥ १७ ॥

**इतीति** । सवैलक्ष्यः सलज्जः ॥

तथा दृष्ट्वा संपद्भरमनुपमं तत्क्रतुवरे
वशीभूतान्भूपान्विपुलतरकीर्तिं च जगति ।
महत्त्वं पार्थस्यातिशयितमथालोक्य कुरुराड्
विषण्णो वैलक्ष्यं निरतिशयमागान्मनसि सः ॥ १८ ॥

**तथेति** । महत्वमिति दुर्योधनेन धृतराष्ट्रस्य पुरतोऽग्रे वक्ष्यमाणमित्यर्थः ॥

समागत्यागारं निजमतिशयेर्ष्याकुलमना
मनागप्याधातुं मनसि न च शक्तः शमविधिम् ।
दधन्मौनं पृष्टोऽप्यथ शकुनिना हेतुमवद-
न्निजे दुःखे चिन्ताजलनिधिनिमग्नोऽभवदसौ ॥ १९ ॥

**समागत्येति** । ईर्ष्यया परोत्कर्षदर्शनजनितया । मनागीपदपि शमविधिमाधातुं न शक्तः । हेतुं अवदन् अकथयन् ॥

यदासौ निर्बन्धात्सुबलतनयेनातिशयितं
निरुद्धस्तत्सर्वं परिभवभवं दुःखमवदत् ।
कृतं पार्थैराशाविजयमथ यज्ञस्य विभवं
नृपाणां वश्यत्वं तदिति सकलं कारणगणम् ॥ २० ॥

**यदेति** । निर्बन्धादाग्रहेण । निरुद्धः कथयितुमुद्याचितस्तदा तत्सर्वं पार्थैः कृतं दिग्विजयादि सर्वं परिभवभवं स्वतिरस्कारजनितं दुःखमवदत् ॥

सखे वारंवारं किमिह मम दुःखस्य शकुने
निदानं ज्ञात्वापि स्वयमनभिजानान इव माम् ।
समापृच्छस्येवं ननु विदित एवास्ति भवतः
समस्तोदन्तोऽयं मम हृदयदाहेऽधिकपटुः ॥ २१ ॥

**सखे इति** । निदानं हेतुं अनभिजानानोऽनभिज्ञः ॥

परिभवदुःखं चतुर्भिराह—

दिशां पूर्वादीनां विजयविधिरन्यैरसुलभो
नृपैः किं वा देवैरपि स इह पार्थैरधिगतः।
वधोऽयं दुःसाध्यः किल मगधराजस्य च पुन-
र्हतिः सा यज्ञेऽस्मिन्महति शिशुपालस्य सुहृदः॥ २२॥

**दिशामिति**। मगधराजस्य जरासंधस्य॥

सखेऽन्यत्ते वच्मि प्रततवरयज्ञे नृपतयो-
ऽवकाशं न प्रापुर्बहुमणिधनोपायनभृतः।
विधेयाः सेवायामवहिततराः कार्यकरणे
प्रतीक्षन्तो धर्मात्मजनयनपातं सकरुणम्॥ २३॥

**सखे इति**। उपायनमुपहारः। 'उपायनमुपग्राह्यमुपहारस्तथोपदा' इत्यमरः। अवकाशमवसरं युधिष्ठिरदर्शनावसरम्। 'विधेयो वचनग्राही' इत्यमरः॥

इदं वारंवारं परिकलयतश्चेतसि सदा
न मे शान्तिर्भ्रान्तिर्मनस इह गाढं विलसति।
वरं वह्नौ पातो गरलमशितं वोचितमहो
न मानभ्रंशेऽस्मिन्नुचित इह मे जीवनविधिः॥ २४॥

**इदमिति**। गरलं विषम्॥

अशक्तोऽहं दुःखोपनयनविधौ हीनकरणः
सहाया संपत्त्या शिथिल इव शक्त्या विरहितः।
विरुद्धं संपश्यन्नहह बहुधा दैवहतकं
विचिन्त्य प्राणानां परिहरणमेवाद्य शरणम्॥ २५॥

**अशक्त इति**। हीनकरणः साधनरहितः। दैवं दिष्टम्। विरुद्धं विपरीतम्। परिहरणं त्यागः॥

इदं वाक्यं दुर्योधनमुखसरोजोद्गतमथो
समाकर्ण्य प्राह प्रणयपरतन्त्रः स शकुनिः।
कथं तान्वीर्याढ्यान्भृशमनुगृहीतान्मुरजिता
जितारातीन्दृष्ट्वा कुरुवर खेदमयसे॥ २६॥

**इदमिति**। प्रणयेन प्रीत्या। अयसे प्राप्नोषि। 'अय गतौ'॥

अथ दुर्योधनदुःखोपशमार्थं पाण्डवानां सहायसंपत्तिमर्जुनपराक्रमं भगवत्साहाय्यं चाह पञ्चभिः—

शराणां प्रक्षेपैर्गगनमनुकीर्णं रचयतः
सुनासीरं वीरं गतमदमधीरं कृतवतः ।
करालात्कालाग्नेः स्वतनुमभितो रक्षितवतो-
ऽर्जुनस्यातिप्रीत्यै व्यरचि मयतक्ष्णाद्भुतसभा ॥ २७ ॥

**शराणामिति** । अनुकीर्णं व्याप्तम् । सुनासीरं इन्द्रम् । 'वृद्धश्रवाः सुनासीरः' ॥

गिरीन्द्रस्योद्धर्ता परममदहर्तामरपतेः
समुद्धर्ता स्वेषां सततहितकर्ता प्रणमताम् ।
निराकर्ता भास्वन्महस इति भर्ता त्रिजगतां
स कर्ता कार्याणां यदि वद किमेषामसुलभम् ॥ २८ ॥

**गिरीन्द्रस्येति** । गोवर्धनस्योद्धर्ता स चेत्तेषां पाण्डवानां कार्यकर्ता तदा किमसुलभम् । न किमपीत्यर्थः ॥

स कर्तुं चाकर्तुं प्रभुरपरथा कर्तुमपि चे-
त्समर्थः पार्थानामभिलषितसिद्ध्यै धृतमतिः ।
नमेयुस्तान्देवा अपि विहितसेवादरभरा
नृदेवाः स्युः के वा जगदखिलमेवास्ति वशगम् ॥ २९ ॥

**स इति** । अपरथा अन्यथा कर्तुमकर्तुमन्यथा कर्तुं समर्थः स भगवान्यदि पार्थानामभीप्सितसिद्ध्यै धृतमतिस्तदा सर्वं तेषां सुलभमित्यर्थः ॥

हुताशात्सुप्रीतादधिगतवतः स्यन्दनवरं
तथा दिव्यान्यस्त्राण्यपि च धनुरक्षय्यमिषुधिम् ।
गुडाकेशस्याहो क इह तुलनां यास्यति स चे-
द्दिशां जेता वीरो भवति किमु ते विस्मय इह ॥ ३० ॥

**हुताशादिति** । तुलनां साम्यम् ॥

विधेयं पार्थानां परिकलय दैवं यदिह ते-
ऽभ्युपायाः प्रारब्धाः क्षयमुपगताः पूर्वविहिताः ।
स लाभो द्रौपद्या द्रुपदनृपतेरभ्युपगमः
समग्राया भूमेर्विजय इह सख्यं भगवता ॥ ३१ ॥

**विधेयमिति** । दैवं विधेयं अनुकूलं परिकलय जानीहि । तदेवाह—स इति ॥

तथाप्येकं यन्मे मनसि तदिहाकर्णय वचः
सहायैर्नो हीनस्त्वमसि कुरुवंशाम्बुधिविधो ।
शतं ते सोदर्या गुरुरपि सपुत्रः सुरनदी-
तनूजो राधेयो ह्यहमपि विधेयाः स्म निरतम् ॥ ३२ ॥

**तथापीति** । सहायानाह—शतं त इति ॥

सहायैरेभिस्त्वं जयसि हरितो निश्चितमिदं
ततो यज्ञश्रेष्ठं कुरुकुलमपाकर्तुमुचितः ।
ददद्दानं भूरि प्रथितजयसंजातसुयशा
न तापस्य स्मर्ता बकरिपुकृताक्षेपजनुषः ॥ ३३ ॥

**सहायैरिति** । हरितो दिशः । ददिति । 'नाभ्यस्तात्–' इति नुमभावः । तापस्येति स्मृयोगे 'अधीगर्थ–' इति षष्ठी । तापं न स्मर्तेत्यर्थः ॥

मुदं धेहि स्वान्ते परिहर विषादं भज धृतिं
समर्थोऽसि स्वीयं सकलमभिलाषं कलयितुम् ।
महोत्साहा धीराः किमिति परसंपत्समुदया-
ल्लभन्ते वैधुर्यं करकलितकल्याणविधयः ॥ ३४ ॥

**मुदमिति** । वैधुर्यं दुःखम् ॥

इतीदं संजल्पं सुबलतनयोक्तं श्रुतिपथं
समानीय प्रज्ञानयनतनयः संमदमधात् ।
मितं च प्रोवाच प्रकटितनिजार्तिस्तु शकुने
विजेतव्याः पार्थास्तदभिविजयात्सर्वविजयः ॥ ३५ ॥

**इतीदमिति** । संजल्पं वाक्यम् । संमदं हर्षम् । 'प्रमोदामोदसंमदाः' इत्यमरः ॥ त्वदुक्तसहायसंपत्सत्त्वेऽपि ते दुर्जया इति जये प्रकारान्तरं पृच्छति—

न ते शक्या युद्धे कथमपि कृतास्त्राः सुरगणै-
र्जेया दैत्यैश्च प्रकटभुजवीर्याः कृतधियः ।
यथा शक्नोम्येतान्परिभवितुमन्येन विधिना
यथा चेज्जानीषे द्रुतमुपदिशाशु प्रणयतः ॥ ३६ ॥

**न ते इति** । स्पष्टम् ॥

विना युद्धं पार्थानभिभवितुमिच्छन्तमचिरा-
दिदं प्राह स्वैरं शकुनिकितवोऽन्धस्य तनयम् ।
अयं ज्येष्ठः कुन्तीसुत इह यदि द्यूतसदने
समाहूयानेयस्त्वरितमथ जेष्यामि तमहम् ॥ ३७ ॥

**विनेति** । कितवोऽक्षदेवी । 'स्यादक्षदेवी कितवः' इत्यमरः ॥

समाहूतो द्यूते ध्रुवमिह समायास्यति पृथा-
तनूजः संपश्यन्ननभिगमने धर्मविरहम् ।
ततो राज्यं कोशं मणिवसुगजाश्वादि सकलं
हरिष्याम्यद्धाहं तव हितकरोऽस्म्यक्षकुशलः ॥ ३८ ॥

**समाहूत इति** । धर्मस्य विरहं अभावं अधर्मम् । वसु धनम् । 'वसु स्वर्णे रत्ने वृद्ध्यौषधे धने' इति हैमः ॥

इति श्रुत्वा दुर्योधननरपतिर्मातुलमथो
जगाद त्वं प्रज्ञानयनपुरतो ब्रूहि सकलम् ।
स मत्स्नेहाधीनो यदि तव वचः श्रोष्यति तदा
करिष्यत्युद्योगं त्वयि निहितभारः कुरुपतिः ॥ ३९ ॥

**इतीति** । धृतराष्ट्रस्य पुरतस्त्वं ब्रूहीति मातुलं जगादेति संबन्धः ॥

तथोक्तेऽसौ दुर्योधननृपतिना साकमवनी-
पतेः पार्श्वे गत्वा शकुनिरवदद्वाक्यकुशलः ।
महाराज श्रीमन्कुरुकुलशिरोभूषणमणे
न जानीषे पुत्रं कथमिह विवर्णं कृशतरम् ॥ ४० ॥

**तथोक्ते इति** । साकं सहेत्यर्थः । 'साकं सत्रा समं सह' इत्यमरः । वाक्यकुशल इत्यनेन यथास्य मनसि क्षोभः स्याद्विदुराद्युक्तं च न कुर्यात्तथोक्तवानिति सूच्यते । तच्च सभापर्वणि स्फुटम् ॥

इति प्रज्ञाचक्षुः शकुनिवचसैवेव सहसा
प्रतोदेन प्रायो द्रुत इव सशङ्कः समभवत् ।
अपृच्छच्चाप्येनं किमिति हरिणस्त्वं कृशतरो
विवर्णः पुत्रासि स्फुटतरमथावेदय मम ॥ ४१ ॥

**इतीति** । प्रतोदेन कशया द्रुतः पीडितोर्वा अश्व इव । 'वाजिवाहार्वगन्धर्व-' इत्यमरः । हरिणः पाण्डुः । 'हरिणः पाण्डुरः पाण्डुः' इत्यमरः ॥

समश्नासि प्राज्यं पिशितमथ भक्ष्यं बहुविधं
दधासि प्रावारान्मणिखचितभूषागणधरः ।
वयस्यैः संभूय व्रजसि मृगयां पश्यसि बहु
प्रकारं संनृत्यं किमिति हरिणस्त्वं कृशतरः ॥ ४२ ॥

**समश्नासीति** । प्राज्यं भूरि । पिशितं मांसम् । प्रावारानिति । 'द्वौ प्रावारोत्तरासङ्गौ' इत्यमरः । मृगयां आखेटकम् ॥

अयं कालः क्षिप्रं कथयितुमिति प्राप्तसमयः
स गान्धारीपुत्रः शकुनिजनितोत्साहतरलः ।
पितुर्वाक्यं श्रुत्वानिलतनयदुर्वाक्यजनितं
तिरस्कारं स्वीयं समकथयदाक्षेपविधुतः ॥ ४३ ॥

**अयमिति** । अनिलतनयो भीमसेनः ॥

अये राजन्भीमः सदसि विचरन्तं यदसह-
त्प्रवादं चाकार्षीत्तदिह हृदयं प्रज्वलति मे ।
न चेच्छामि प्राणान्कथमपि विधर्तुं मृतिरहो
वरा मे न श्रेयो जगति नियतं जीवनमिह ॥ ४४ ॥

**अय इति** । विचरन्तम् । सभां द्रष्टुमिति शेषः । प्रवादं निन्दाम् । प्रज्वलति संतप्तं भवति ॥

संतापहेतुमाह—

ममाभूद्यैः साकं प्रचुरतरवैरं विधिवशा-
त्त एवाद्य प्राज्यं सुखमनुभवन्तीह रिपवः ।
अहो मे धिग्जन्म क्षितितलवृथाभारकरणं
धिगायुर्धिक्सौख्यं यदिह रिपुभिः स्यात्परिभवः ॥ ४५ ॥

**ममेति** । स्पष्टम् ॥

न राज्यं नो यानं न च विविधवासांसि न हया
न नृत्यं नो भक्ष्यं विविधरसमन्नादि च न मे ।

न कान्ता नो हर्म्याण्यपि रिपुपरीहासजनित-
प्रतीकारस्याद्य प्रमदमुपधातुं पटुतराः ॥ ४६ ॥

**नेति** । प्रतीकारस्तिरस्कारः ॥

निकारो मच्चित्ते नृपतिवर कुन्तीसुतभवः
पदं चित्ते धत्ते स्मृतिमुपगतश्चेदनुलवम् ।
तदा लेखाधीशप्रभृतिसुरसंपत्परिभव-
प्रचण्डोऽपि प्रायो मम सुखसमूहो गरलति ॥ ४७ ॥

**निकार इति** । 'निकारः स्यात्परिभवे' इति धरणिः । लेखाधीश इन्द्रः । गरलति गरलमिवाचरति । 'क्ष्वेडस्तु गरलं विषम्' इत्यमरः ॥

विभो दृष्टे तस्मिन्क्रतुवरमहे तस्य तपसः
सुतस्य क्षौणीन्द्रैर्य इह धनरत्नार्पणविधिः ।
कृतः प्रायो जिष्णोरपि न स भवेदेव किमतः
परं वाच्यं दुःखं किमिह मम हृत्कृन्तनविधौ ॥ ४८ ॥

**विभो इति** । क्रतुवरस्य महे उत्सवे । 'मह उद्धव उत्सवः' इत्यमरः । तपसः सुतस्य युधिष्ठिरस्य ॥

अथ राज्ञ उत्तेजनार्थं स्वनिश्चितद्यूतकार्ये राजानमनुकूलयितुं राजसूयशोभां त्रयस्त्रिंशत्पद्यैराह—

कलिङ्गाः सौराष्ट्रा मगधमरुमत्स्याधिपतयः
परं चौलाः पाण्ड्याः क्रकथशकहूणाङ्गवरटाः ।
अथान्ध्राः पौण्ड्राश्च द्रविडवसुधानाः शिबिभवाः
प्रतीक्षन्ते धर्मात्मजनयनपातं सकरुणम् ॥ ४९ ॥

**कलिङ्गा इति** । स्पष्टम् ॥

तुरङ्गा मातङ्गा अपि रथवरा वस्त्रनिचयाः
सुवर्णं प्रावाराजिनविविधसत्कम्बलचयाः ।
अनर्घा रत्नौघा अपि वसुमतीपालभृतकै-
रुपानीता यत्रान्नृपतिनयनातिथ्यमभजन् ॥ ५० ॥

**तुरङ्गा इति** । भृतकैर्भृत्यैः ॥

तदवसरे राज्ञामपि प्रवेशो दुर्लभोऽभूदित्याह त्रिभिः—

क्षणं तूष्णीमाःस्व द्विजगणसमाराधनपरो
नृपः पत्नीशालामधिवसति दीक्षामुपगतः ।
इदानीं मौद्गल्यत्रितकुशिकजन्मात्रिपुलह-
क्रतुव्यासस्फोटायनलिखितजाबालिसहितः ॥ ५१ ॥

**क्षणमिति** । तत्र राजसूये राज्ञां प्रवेशसमये इति परिजनानां द्वारपालानां उक्ती-र्वचनान्यशृणवमिति तृतीयेनान्वयः ॥

ननु श्रीकृष्णादीन्प्रति वक्तव्यं तत्राह—

स भक्त्या विप्राणां चरणकमलान्यर्चति हरि-
र्हिडम्बद्विड्भक्ष्याण्युपहरति भव्यान्यविरतम् ।
गुडाकेशः क्लेशानपरिगणयंस्तान्परिचर-
त्यजस्रं तत्पूजोपकरणपरौ चापि यमलौ ॥ ५२ ॥

**स इति** । यमलौ नकुलसहदेवौ ॥

सदस्यैः शाण्डिल्यद्वितभरतपैङ्गारुणिवसु-
प्रधानैर्लौगाक्षिध्रुवकवषजैमिन्यनुसृतैः ।
समाकीर्णे पुण्ये क्रतुसदसि नास्माकमधुना-
ऽवकाशो विज्ञप्तेरिति परिजनोक्तीरशृणवम् ॥५३॥(विशेषकम्)

**सदस्यैरिति** । स्पष्टम् ॥

अथ द्वारपालानां त्रिभिर्विज्ञप्तिमाह—

अयं काशीशस्त्वां प्रणमति तथा कोसलपतिः
समीहां त्वत्पादाम्बुजयुगलसंवीक्षणमहे ।
दधानो द्वार्यास्ते नृपतिलकचोलाधिपतिर-
प्यसंख्यान्मातङ्गांश्चरणयुगले ढौकयति ते ॥ ५४ ॥

**अयमिति** । ढौकयति उपायनीकरोति ॥

तुरङ्गान्गान्धाराधिपतिरुपदीकृत्य सततं
प्रतीक्षां कर्तुं ते निवसति नृप द्वारि नियतम् ।
तथा काञ्चीनाथः सममिह विभो चेदिपतिना
स्थितोऽसौ काम्बोजो नृपवर तथा कैकयपतिः ॥ ५५ ॥

**तुरङ्गानिति**। उपदीकृत्य उपायनीकृत्य॥

इति द्वाःस्थैरुच्चैरधिगमितनत्यादरविधी-
निरुद्धान्द्वार्येव प्रततविविधोपायनयुतान्।
समायातान्राज्ञः कथमपि निविष्टान्नृपतिना
कृतायामाज्ञायामहमिति तदापश्यमखिलान्॥ ५६॥

**इतीति**। उच्चैरिति यथा द्वारि स्थितास्तेऽपि विज्ञप्तिं शृण्वन्ति तदर्थं अधिगमितः प्रापितो नत्यादरविधिर्येषाम्। निरुद्धानिति। आज्ञां विना प्रवेष्टुमशक्यत्वात्। अपश्यमिति त्रयाणामन्वयः॥

अथ तत्र वेदशास्त्रसंपन्नानां ब्राह्मणानां समाजं तत्तच्छास्त्रप्रमेयैकदेशनिरूपणपूर्वकं च शास्त्रस्वरूपकथनं सुयोधनोक्त्या निरूपयति 'ऋचः' इत्येकादशभिः। तत्र वैदिकानां पठनप्रकारमाह—

ऋचः शिक्षाभ्यासाधिकललितकण्ठादिनियत-
स्थलप्रोद्यद्वर्णस्वरमधुरताराः श्रुतिसुखाः।
यजूंषि स्वच्छन्दं क्रमपदजटाजूंषि मुनयः
सुसामान्याथर्वाण्यपि किल पठन्तः क्रतुवरे॥ ५७॥

**ऋच इति**। शिक्षायाः 'अथ शिक्षां प्रवक्ष्यामि पाणिनीयं मतं यथा' इत्युक्तरूपायाः 'शिक्षा कल्पो व्याकरणम्' इति वेदाङ्गभूतग्रन्थविशेषस्य योऽभ्यासो गुरुमुखात्संप्रदायानुसारेण पठनं तेनाधिकं ललिता मनोहराः कण्ठादीनि यानि नियतस्थलानि तेभ्यः प्रोद्यन्त उच्चार्यमाणा ये वर्णा अकाराद्यास्त्रिषष्टिः स्वराश्चोदात्तादयस्तैर्मधुरास्तारा उच्चैः पठ्यमानाः। ततः कर्मधारयः। अतएव श्रुत्योः कर्णयोः सुखकारिणी ऋचः पठन्तः। ऋक्प्रधानं वेदम्। ऋग्वेदमित्यर्थः। क्रमपदजटाजूंषि तद्युक्तानि यजुःसामाथर्वाणि च पठन्तः। क्रमपदेत्यादि त्रयाणां विशेषणम्। लिङ्गविपरिणामेन ऋचामपि विशेषणम्। ऋग्विशेषणं च लिङ्गव्यत्ययेन यजुरादीनां विशेषणम्। त्रिषष्टिवर्णास्तु ह्रस्वदीर्घप्लुतभेदेन अणो नव दीर्घाभावात्। ऌवर्णऌवर्णाश्चत्वारः ह्रस्वाभावादेवाष्टौ। विसर्गानुस्वारजिह्वामूलीयोपध्मानीयाश्चत्वारः। एवं पञ्चविंशस्तावन्तश्च स्पर्शाः, यवलाः सानुनासिका निरनुनासिकाश्च षट्। एको रेफः। शषसहळक्षाः षट्। एवं त्रिषष्टिः। शिक्षाप्रकारस्तु—'आत्मा बुद्ध्या समेत्यार्थान्मनो युङ्क्ते विवक्षया। मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्॥ मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम्। सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः॥ वर्णाञ्जनयते तेषां विभागः पञ्चधा मतः। स्वरतः कालतः स्थानात्प्रयत्नानुप्रदानतः॥ उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः। ह्रस्वो दीर्घः प्लुत इति कालतो नियमा अचि॥ अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा।

जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च ॥ प्रयत्नानुप्रदानौ तु यत्नद्वैविध्यभेदतः । प्रयत्न आभ्यन्तरीयो बाह्य इत्यपि भेदतः ॥' एवं पठनप्रकारं फलं चाह—'व्याघ्री यथा हरेत्पुत्रान्दन्ताभ्यां न च पीडयेत् । एवं वर्णाः प्रयोक्तव्या नाव्यक्ता न च पीडिताः ॥ सम्यग्वर्णप्रयोगेण ब्रह्मलोके महीयते ॥' अन्यथा पाठे दोष उक्तः—'कुतीर्थादागतं दग्धमपवर्णं च भक्षितम् । न तस्य पाठे मोक्षोऽस्ति पापाहेरिव किल्बिषात् ॥ सुतीर्थादागतं व्यक्तं स्वाम्नायं सुव्यवस्थितम् । सुस्वरेण सुवक्त्रेण प्रयुक्तं ब्रह्म राजते ॥' अन्यच्च तत्रैव—'मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥' इति । एतादृशीः ऋचः यजूंषि सुसामान्याथर्वाण्यपि क्रतुवरे पठन्तो मुनयो दृष्टा इति नवमश्लोकेनान्वयः । शिक्षोक्तकण्ठताल्वादिनियतस्थानसमुच्चार्यमाणवर्णस्वरसहितोच्चतरपठनेन कर्णसुखकारिपदक्रमजटासंहितापाठनिरतास्त्वृत्विजो दृष्टा इति भावः ॥

> परे यत्र प्रातःसवनकजना व्यग्रमनसः
> समुद्युक्ता माध्यंदिनसवनहोमस्य समये ।
> मुनीन्द्रास्तार्तीये नृवरसवने दत्तहृदयाः
> परं धाय्याभिज्ञाः कलितशुभसांनाय्यविधयः ॥ ५८ ॥

**परे इति** । प्रातःसवनमाध्यंदिनसवनतृतीयसवनानि गायत्रत्रैष्टुभजागतच्छन्दोरूपाणि कालविशेषाः ऋत्विजाम् । एतत्कर्मकल्पग्रन्थादवसेयम् । धाय्या ऋक् अग्निसमिन्धनपाठ्या। सांनाय्यं हविः । 'ऋक् सामिधेनी धाय्या च या स्यादग्निसमिन्धने' इत्यमरः। 'सानाय्यं हविरग्नौ तु हुतं त्रिषु वषट्कृतम्' इति च । 'पाय्यसांनाय्यनिकाय्यधाय्यामानहविर्निवाससामिधेनीषु' इति निपातः । सम्यक् नीयते होमार्थमग्निं प्रतीति सांनाय्यं हविर्विशेषः । हुतं त्रिषु वषट्कृतमित्यस्यार्थः । वषट्कृतं हुतं वषट्कारमन्त्रेण हुतं त्रिषु वषट्कृतं पयः वषट्कृतः पुरोडाशः वषट्कृता यवागूः । एवं च तत्तत्कालीनहोमसमयसावधाना वै याज्ञिका धाय्यादिमन्त्राभिज्ञाः चातुर्होत्रकर्मकुशला दृष्टा इति संबन्धः ॥

मीमांसाप्रमेयमाह—

> श्रुतिं लिङ्गं वाक्यं प्रकरणमथ स्थानकमहो
> समाख्यां जानन्तः कलितपरदौर्बल्यविधयः ।
> लिङर्थं धात्वर्थं त्रिविधविधिवादं च निगमा-
> नुरूपं मन्वानाः क्रतुसदसि मीमांसकवराः ॥ ५९ ॥

**श्रुतिमिति** । 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' इति सूत्रेण भगवाञ्जैमिनिः श्रुत्यादीनां पूर्वपूर्वबलीयस्त्वमाह । तत्सूत्रविषयश्चात्र पद्ये । तथा हि—श्रुतिलिङ्गादयः षडिह विनियोजकाः तत्र विरुद्धयोः समवाये समुच्चयो

न संभवतीत्येकेनापरस्य बाधो वक्तव्यः। स च बलवता दुर्बलस्येति स्थितिः। तदुक्तम्—पारदौर्बल्यमिति। यदपेक्षया यत्परं तद्दुर्बलम्। तत्र हेतुः—अर्थविप्रकर्षादिति। पूर्वापेक्षया विलम्बेनार्थप्रत्यायकत्वात्। तत्र निरपेक्षो रवः श्रुतिः। यथा व्रीहीनवहन्तीति। अत्र क्रियाजन्यफलभागित्वं कर्मत्वं बोधयन्ती द्वितीया निरपेक्षैव व्रीहीणामवघातशेषित्वं प्रतिपादयति। अर्थविशेषप्रकाशनसामर्थ्यं लिङ्गम्। यथा बर्हिर्देवसदनं दामीति। अत्र लवनार्थप्रकाशतया बर्हिर्लवने विनियोगः। परस्पराकाङ्क्षावशात्क्वचिदेकस्मिन्नर्थे पर्यवसितानि पदानि वाक्यम्। यथा देवस्य त्वासवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामीति। अत्र लिङ्गेन निवापे विनियुज्यमानस्य समवेतार्थभागस्यैकवाक्यताबलेन 'देवस्य त्वा' इत्यादिभागस्यापि तत्र विनियोगः। लब्धवाक्यभावानां पदानां कार्यान्तरापेक्षावशाद्वाक्यान्तरेण संबन्धः। आकाङ्क्षापर्यवसन्नं प्रकरणम्। यथा समिधो यजतीत्यादि। अस्य हि दर्शपौर्णमासकथंभावाकाङ्क्षायां पाठवशाच्छेषत्वम्। स्थानं क्रमः। स चानेकस्याम्नातस्य संविधिविशेषान्मानम्। यथा दब्धिरस्यदब्धो भूयासमित्याग्नेयाग्नीषोमीययोरुपांशुयागः क्रमेण ब्राह्मणेषु पठितः, मन्त्रभागेऽपि क्रमेणानुमन्त्रत्रयं पठितम्, तत्राग्नेयाग्नीषोमयोर्लिङ्गेनैव विनियोगसिद्धिः। दब्धिरसीत्यत्र तु न लिङ्गादिविनियोजकम्। किंतु यस्मिन्प्रदेशे ब्राह्मणे उपांशुयागविधानं तत्रैव मन्त्रेऽप्यस्य पाठ इति क्रमादुपांशुयागानुमन्त्रणेऽस्य विनियोगः। समाख्या योगबलम्। यथा हौत्रमौद्गात्रमित्यादि। तत्र होतुरिदं हौत्रमित्यादियोगबलेन होत्रादिसमाख्यातानि कर्माणि होत्रादिभिरनुष्ठेयानीति। विरोधोदाहरणान्याकरे द्रष्टव्यानि। अयमेव सूत्रनिर्देशः पूर्वपद्यार्थे कृतः। लिङर्थमिति। 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यत्र 'यागेनेष्टं भावयेत्' इति यजधातोर्यागरूपोऽर्थः। लिङश्च इष्टभावनरूपोऽर्थोऽभ्युपगम्यते। त्रिविधविधिवादमिति। अपूर्वविधिर्नियमविधिः परिसंख्याविधिरिति॥

व्याकरणस्वरूपमाह—

समुद्भूतं यत्तज्जगदुपकृतौ पाणिनिमुने-
मुखाम्भोजात्कात्यायनकृतविशेषार्थकलनम्।
भुजङ्गेन्द्राधीशोद्भवगहनसद्भाष्यविवृति-
प्रकर्षाढ्यं शास्त्रं सदसि कथयन्तोऽतिसुधियः॥ ६०॥

**समुद्भूतमिति**। जगदुपकृताविति निमित्तार्थे सप्तमी। पाणिनिकात्यायनपतञ्जलिभिः सूत्रवृत्तिमहाभाष्याणि कृतानीति तथात्रोक्तं तच्छास्त्रं पाणिनिव्याकरणं कथयन्तो दृष्टा इति पूर्ववदन्वयः॥

ज्योतिःशास्त्रमाह द्वाभ्याम्—

धनुर्ज्यासत्कोटिप्रततभुजसंज्ञादिललितं
ग्रहाधीशप्रोक्तं गणितगुरुगर्गाद्यधिगतम्।

भचक्रोद्यत्कक्षाकलनसहितं ज्योतिषमहो

समग्रं जानन्तः स्फुटगणितबीजेषु कुशलाः ॥ ६१ ॥

**धनुर्ज्येति** । धनुर्ज्याकोटिभुजकक्षादिसंज्ञास्तच्छास्त्रे उपनिबद्धास्तत एव ज्ञेयाः । समग्रं स्कन्धत्रयात्मकम् । स्फुटगणितं पाटीगणितम्, बीजमव्यक्तगणितम् ॥

भदन्ताः सर्वज्ञा ह्यजवृषनृयुग्मेन्दुसदन-

द्विपद्विट्कन्याक्षी वणिगलिधनुर्धारिमकरैः ।

सकुम्भैः सन्मीनैर्द्युमणिशशिभौमज्ञगुरुभिः

सुयुक्तं जानन्तः पर इह खगोलं सुमतयः ॥ ६२ ॥

**भदन्ता इति** । 'स्याद्भदन्तो ज्यौतिषिको दैवज्ञो दैवलेखकः' इति केशवः । अजो मेषः । वृषः प्रसिद्धः । नृयुग्मं मिथुनम् । इन्दुसदनं कर्कः । द्विपद्विट् सिंहः । कन्याक्षी कन्या । वणिक् तुला । अलिर्वृश्चिकः । धनुर्धारी धनुः । शेषं स्पष्टम् ॥

अथ तर्कशास्त्रविषयमाह—

वितण्डाजल्पौघैर्विरहितसुवादोद्धुरगिरः

प्रमाणैः प्रत्यक्षादिभिरपि च मेयक्रमविदः ।

अभावाढ्यव्याप्तिस्फुटलसितहेत्वच्छविलस-

न्मतिप्रौढा वैशेषिकमतविशेषप्रणयिनः ॥ ६३ ॥

**वितण्डेति** । तत्र स्वपक्षस्थापनाहीना परपक्षदूषणमात्रावसाना वितण्डा, उभयसाधनवती नानावक्तृकपूर्वोत्तरपक्षप्रतिपादकवचनसंदर्भात्मिका कथा जल्पः, तत्त्वबुभुत्सोः कथा वादः । तत्रैवं व्याख्या—वितण्डाजल्पौघैर्विरहितः शोभनो यो वादस्तेनोद्धुरा उत्कृष्टा गीर्येषाम् । प्रत्यक्षादिभिश्चतुर्भिः प्रमाणैर्मेयानां प्रमेयानां प्रत्यक्षानुमित्युपमितिशब्दानां क्रमं विदन्ति । अभावाभ्यां अत्यन्ताभावान्योन्याभावाभ्यां आढ्या अभावघटिता या व्याप्तिस्तया स्फुटं लसितस्तद्विशिष्टो यो हेतुर्धूमो वह्निव्याप्य इत्येवंरूपस्तत्र अच्छा विलसन्ती प्रतिभारूपा मतिर्ज्ञानम् । व्याप्तिविशिष्टहेतुताज्ञानमित्यर्थः । तत्र प्रौढा । वैशेषिके सप्तपदार्थीये काणादमते विशेषेण प्रणय आसक्तिर्येषाम् ॥

पुराणज्ञा धर्माधिकरणविदः कापिलमत-

प्रगल्भा योगज्ञाः स्वरविततसंगीतकुशलाः ।

कवित्वालंकाराद्भुतविविधसंनाटकभिदा-

भिधानग्रन्थज्ञा भरतमुनिसूत्रार्थनिपुणाः ॥ ६४ ॥

**पुराणज्ञा इति** । धर्माधिकरणं स्मृतिः । कापिलमतं सांख्यशास्त्रम् । योगः पात-

जलसूत्राणि । स्वरैः षड्जादिसप्तभिर्वितते विस्तीर्णे संगीते कुशलाः । नाटकानां भिदा दशविधत्वम् । अभिधानं नामलिङ्गानुशासनम् । भरतसूत्रं रसशास्त्रम् । स्पष्टमन्यत् ॥

धनुर्वेदाभिज्ञाः सकलमनुशास्त्रोक्तविविध-
प्रकारैर्विष्ण्वीशद्विपवदनसूर्याद्रिपभुवाम् ।
उपास्तिं जानन्तः कविगुरुसमा बुद्धिविभवै-
रये नानादेश्याः क्रतुसदसि दृष्टा द्विजवराः ॥ ६५ ॥

**धनुर्वेदेति** । मनुशास्त्रं मन्त्रशास्त्रम् । हरौ मध्यगते शंकरेभास्येनागसुता इति विष्णुमुख्यत्वेनात्रोक्तं विष्ण्वीशेति । नानादेशेभ्य आगता नानादेश्याः ॥

अथ निर्गुणब्रह्मस्वरूपं विशेषणद्वारा कथयंस्तच्छास्त्रविषयमाह—

निराकरं नित्यं गुणरहितमद्वैतममल-
प्रकाशं स्वानन्दानुभवसहितं नाशरहितम् ।
परं ब्रह्म स्वान्ते सततमुपशान्ते कलयतः
समाधिस्थान्ब्रह्मात्मजशुकमुखानैक्षिषमहम् ॥ ६६ ॥

**निराकारमिति** । 'अपाणिपादो जवनो ग्रहीता' 'अविनाशी वारेयमात्मा', 'एकमेवाद्वितीयम्' इत्यादिश्रुतिप्रतिपाद्यं ब्रह्म ध्यायन्तः ब्रह्मात्मजाः सनकाद्याः ॥

स्फुरद्बर्होत्तंसं श्रुतमुरलिकानादविवश-
स्मराक्रान्तस्वान्तव्रजयुवतिनेत्रान्तकलितम् ।
त्रयीमृग्यं ध्यानात्परिकलयतो भक्तिसुभगा-
न्कृतार्थाञ्शाण्डिल्यप्रभृतिमुनिवर्यानकलयम् ॥ ६७ ॥

**स्फुरदिति** । श्रुतो यो मुरलिकानादस्तेन विवशाः स्मराक्रान्तस्वान्ता या व्रजयुवतयस्तासां नेत्रान्तेन कलितम् ॥

स्रवद्गण्डाभोगैर्मधुकरकलध्वानसुभगैः
समन्तादाकीर्णं गिरिवरनिभोपायनगजैः ।
सदश्वैः काम्बोजैर्जवजितसमीरैर्बहुविधै-
स्तथा नानादेश्यैर्निचितमभवत्पाण्डवसदः ॥ ६८ ॥

**स्रवदिति** । निचितं व्याप्तम् ॥

पयो दध्यन्नाज्यं विविधरसभक्ष्यं बहुविधं
तथा लेह्यं पेयं द्विजसुहितकृच्चोष्यमपि च ।

असंख्यातं सूदैरुपहृतमभूद्भोजनविधौ
दिवारात्रं राजंस्तदिह कुतुकं मे जनयति ॥ ६९ ॥

**पय इति** । द्विजानां सुहितं तृप्तिं करोतीति तथा । सूदैः पाककृद्भिः ॥

दानं निरूपयति—

गजानामश्वानां द्रविणनिचयानां सुविलस-
द्द्युतीनां रत्नानामपि सुवसनानां च निचयः ।
द्विजातिभ्यः सृष्टः प्रतिदिनमसंख्यः सुमतिना
पृथायाः पुत्रेण क्षितिपवचसो नास्ति विषयः ॥ ७० ॥

**गजानामिति** । द्रविणं द्रव्यम् । 'हिरण्यं द्रविणं द्युम्नम्' इत्यमरः । सृष्टः प्रतिपादितः ॥

शिशुपालवधहेतुभूतं श्रीकृष्णपूजनमाह—

इदं चित्रं चान्यच्छृणु नरपते तत्र यदभू-
त्समाजे पूजोपक्रमणसमये पार्थमनसि ।
विमर्शोऽभूदित्थं प्रथममिह कस्यार्चनविधि-
र्विधेयो देवर्षिक्षितिपतियुते यज्ञसदसि ॥ ७१ ॥

**इदमिति** । चित्रमाश्चर्यम् । विमर्शो विचारः कस्य प्रथमं पूजनमित्येवंरूपः ॥

ततस्तूष्णीं सर्वेष्वनधिगततत्त्वेषु सदसि
स्थितेषु प्रोवाच क्षितिप सहदेवः समयवित् ।
विहाय श्रीकान्तं निखिलजनकान्तं नरपते
नितान्तं कः पूज्यः कथय यदि चित्तेऽस्ति विधृतः ॥ ७२ ॥

**तत इति** । अनधिगततत्त्वेषु अप्राप्तनिश्चयेषु ॥

निधानं भक्तानां सुकृतमपिधानं समयिनां
समाधानं बुद्धेः किमपि च विधानं श्रुतिगिराम् ।
प्रधानं पुण्यानां विमलपरिधानं नयनयो-
र्मुदाधानं हित्वा क इव परिपूज्योऽन्यविबुधः ॥ ७३ ॥

**निधानमिति** । निधानं निधिः । अपिधानमनावृतम् । विधानं श्रुतिप्रतिपाद्यम् ॥

पुनस्तस्यैवासाधारणान्कतिपयगुणानाह—

न यच्छक्यं दानैर्बहुविधविधानैरसुलभं
तपोभिर्दुष्प्रापं जपयजनपूजादिसहितैः ।
अलभ्यं धाम स्वं दिशति दयया यः प्रभुरसौ
स्वभक्तानां तस्मात्क इह परिपूज्योऽपरबुधः ॥ ७४ ॥

**न यच्छक्यमिति** । स्पष्टम् ।

स्मृतिं यातः सद्यः शमयति मनोमोहपटलं
हृदि ध्यातो भक्तैर्दलयतितमां दीर्घदुरितम् ।
वचः प्राप्तो विघ्नानपनयति सर्वांस्तनुभृतां
तमीशं हित्वान्यः क इह परिपूज्योऽस्ति जगति ॥ ७५ ॥

**स्मृतिमिति** । स्पष्टम् ॥

इतीदं तद्वाक्यं श्रुतिपुटसुधासेकसदृशं
निपीय प्रेमार्द्रा सुरमनुजसंसत्समभवत् ।
विहायैकं चैद्यं भगवति कृतद्वेषमतुला-
भिमानं संस्पर्धातिशयकलुषीभूतहृदयम् ॥ ७६ ॥

**इतीति** । चैद्यं शिशुपालम् ।

ततः पार्थः प्रीतिप्रसरविवशः प्रेमपुलका-
चिताङ्गो भीमाद्यैर्मुदित इह सर्त्विक्परिवृतः ।
शुभे हैमे पीठे स्थितमखिलकान्तं बहुविधै-
र्विधानैरानर्चाखिलविबुधवन्द्यं यदुवरम् ॥ ७७ ॥

**तत इति** । प्रीतेः प्रसर आधिक्यं तेन विवशः ॥

सदूर्वाश्यामाकं सरसिजसुगन्धाद्यविविध-
प्रसूनौघभ्राम्यन्नलिकुलकलध्वानसुभगम् ।
स्थितं विष्णुक्रान्तायुतकनकपात्रे भगवतः
पदाम्भोजद्वन्द्वेऽर्पितममलपाद्यं नृपतिना ॥ ७८ ॥

**सदूर्वेति** । 'श्यामाकविष्णुक्रान्ताब्जदूर्वाः पाद्यजले क्षिपेत्' इति पाद्यस्वरूपकथनपूर्वकं पाद्यकल्पनमादावुक्तम् ॥

'अर्घपात्रे क्षिपेद्दूर्वातिलदर्भाग्रसर्षपान्' इत्युक्तप्रकारमर्थमाह—

सगन्धं सिद्धार्थाक्षतयवसुदूर्वाङ्कुशतिलैः
सुयुक्तं पुष्पाढ्यं शिरसि निदधेऽर्घं नरपतिः ।
सजातीकंकोलं सुरकुसुमसंयुक्तममलं
जलं राज्ञा तस्याचमनविधये दत्तमभवत् ॥ ७९ ॥

**सगन्धमिति** । 'लवङ्गजातीकङ्कोलं निक्षिप्याचमेत्' इत्युक्तप्रकारमाचमनमाह—सजातीति । 'जातिः स्त्री गोत्रजन्मनोः । जातीफले च मालत्याम्' इति हैमः । 'कङ्कोलकं कोशफलम्' इत्यमरः । 'शीतलचीनी' इति भाषायाम् । सुरकुसुमं लवङ्गम् । 'लवङ्गं देवकुसुमम्' इत्यमरः ॥

ततस्तं स्नानाद्यैर्विविधमणिभूषासुवचनैः
सुगन्धैर्माल्यैरप्यतिसुहितकृद्भक्ष्यनिचयैः ।
समाराध्य प्रेम्णा प्रणयभरबद्धाञ्जलिपुटः
सपत्नीकः कुन्तीसुत इह कृतार्थः समभवत् ॥ ८० ॥

**तत इति** । स्पष्टम् ॥

अभूदुच्चैर्घोषो निखिलमनुजानां जय विभो
चिरं जीवेत्याम्रेडित इह महाहर्षजनकः ।
फलं कोपप्रीत्योः सममिह विभक्तं भगवता
तदा चैद्ये पार्थेऽपि च सकललोकैकविदितम् ॥ ८१ ॥

**अभूदिति** । आम्रेडितं जय जय जीव जीवेत्येवंरूपम् । 'आम्रेडितं द्विस्त्रिरुक्तम्' इत्यमरः ॥

अथ द्वाभ्यां स्वस्य दुःखकारणमाह—

इदं सर्वं तिष्ठत्वपरमिदमेकं मम हृदि
प्रविष्टं शल्यं यत्कथमिव पुनर्निःसरति तत् ।
सभां द्रष्टुं याते मयि जलनिमग्ने भ्रमवशा-
द्विहस्योच्चैर्भीमो वसनयुगलं यत्किल ददौ ॥ ८२ ॥

**इदं सर्वमिति** । स्पष्टम् ॥

प्रतीहारभ्रान्त्या मम हृतिरभूद्भित्तिसहिते
प्रदेशेऽथ द्वारि प्रचुरतरभित्तिभ्रमवशात् ।

स्थितस्य द्रौपद्याः परिजनयुतायाः सहसितं
वचः प्रज्ञानेत्रात्मज इति मनो विह्वलयति ॥ ८३ ॥

**प्रतीहारेति** । प्रतीहारस्य द्वारस्य भ्रान्त्या । 'स्त्री द्वार्द्वारं प्रतीहारः' इत्यमरः । भित्तिप्रदेशे गच्छतो द्वारभ्रान्त्या हतिरभूत् । अथ द्वारि पूर्ववद्विपरीतभ्रान्त्या भित्तिरेवेयमिति स्थितस्यागच्छतः । प्रज्ञानेत्रस्यान्धस्यात्मज इति वचो दुःखबीजम् ॥

इमे सस्त्रीकाश्चेत्कुटिलहृदयाः पाण्डुतनयाः
परीहासं चक्रुर्विविधमदमत्ता बहुविधम् ।
प्रतीकारं कर्तुं यदि च न भवेयं क्षम इह
स्वयं धिङ्मे जन्म ध्रुवमनुचितं जीवनमपि ॥ ८४ ॥

**इमे इति** । प्रतीकारं प्रत्यपकारम् ॥

इति प्रज्ञाचक्षुर्निजतनयदुःखौघमखिलं
निपीय श्रोत्राभ्यां मनसि विदधे खेदमतुलम् ।
अवोचच्चाप्येनं शममुपदिशन्वाक्यमनघं
स्थितिज्ञो लोकानामतिविशदबुद्धिर्धृतिपरः ॥ ८५ ॥

**इतीति** । अनघं शमप्रधानत्वान्निर्दोषम् ॥

तदेवाह—

सुखं दुःखं दैवादुपनमति गच्छत्यपि परं
न धीरस्तत्र स्याद्व्यथित इह हृष्टोऽपि न भवेत् ।
ध्रुवं पश्यन्बुद्ध्या सततमनिवार्यं विधिशतै-
र्जगत्यां पर्यायागतमखिलसाधारणमपि ॥ ८६ ॥

**सुखमिति** । भावानामागमापायित्वाद्दुर्निवार्यत्वाच्च शमेनैव निवृत्तिरिति भावः ॥

यदा यस्माद्येन स्वयमिह विना यत्नमनघ-
स्वभाग्यात्संप्राप्तं यदतिबहु चाल्पं च सुधिया ।
विधेयः संतोषो निजमनसि चेत्सौख्यमतुलं
न दुःखं तस्य स्यात्क्वचिदपि न तापो न च रिपुः ॥ ८७ ॥

**यदेति** । स्वज्ञानकल्पिता एव शत्रुमित्रोदासीनाः । विवेकदृष्ट्या तु सर्वस्यात्मरूपत्वाद्ब्रह्माद्वयत्वेन द्वितीयस्याभावान्न भयशङ्कापि । 'द्वितीयाद्वै भयं भवति' इति श्रुतेः । तस्मात्संतोषेणैव सुखं भवति नान्यथा यत्नशतैरिति भावः ॥

ननु दैवविहितं दुःखं ज्वरादि सोढुं शक्यम्, कथं शत्रुकृतं दुःखं सोढव्यमिति चेत्तत्राह-

जनः सर्वः स्वीयं सुकृतमनुभुङ्क्तेऽथ दुरितं
ततो दोषः कस्मिन्सुत वद विधेयः सुमतिना ।
मदीयोऽयं शत्रुर्मम जनितमेतेन सुतरा-
मनिष्टं कष्टं चेत्यहह कुमतेर्वै विलसितम् ॥ ८८ ॥

**जन इति** । इदं सर्वं स्वप्रारब्धमेव नान्यकृतम् । शत्रुणेदं कृतमिति तु मोहविलसितमेवेत्यर्थः ॥

वचो गम्भीरार्थं मधुरतरमुक्तं नृपतिना
कटुत्वं भेजे तद्धृदि कलुषिते कौरवपतेः ।
सितापि द्राक्षातो मधुरसुरसा पित्तविकृते-
ऽतितिक्ता किं न स्याज्ज्वरयुतमनुष्यस्य रसने ॥ ८९ ॥

**वच इति** । अपिर्भिन्नक्रमः । द्राक्षातोऽपि मधुरसुरसा सिता शर्करेत्यर्थः ॥

शमोपदेशमसहमानः साधिक्षेपं दुर्योधन आह—

अथैनं गान्धारीसुतशतवरिष्ठोऽरुणदृशा
निरीक्षन्क्षोभेणाकुलितहृदयः क्रूरमवदत् ।
समर्थः सन्कस्मात्परिभववचांस्यानिलिमुखो-
द्गतानि क्षोणीश श्रुतिपथविदाहीन्यभिसहे ॥ ९० ॥

**अथेति** । स्पष्टम् ॥

तद्वाक्यमनूद्य दूषयति—

सुखं दुःखं दैवोपनतमिति सत्यं तदपि च
प्रबुद्धाः सद्बुद्धिद्रविणबलसाहाय्यत इह ।
बलाज्जित्वा दैवं प्रबलमनिवार्यं कुमतिभि-
र्विराजन्ते सर्वोपरि पुरुषधीराः कतिपये ॥ ९१ ॥

**सुखमिति** । स्पष्टम् ॥

त्वया यत्संदिष्टं सरलमतिना ज्ञानमनघं
यतीनामारण्यप्रगुणविधिभाजां समुचितम् ।
कथं मादृक्पात्रं भवति जगतीपालकुलजः
समुत्पन्नारातिप्रभवपरितापार्दितमनाः ॥ ९२ ॥

**त्वयेति** । सरलमतिनेति साकूतोक्तिः । आरण्यानां वानप्रस्थानां यः प्रगुणविधिस्तद्भाजाम् ॥

कारणबाहुल्यात्त्वां प्रतीदं दुःखं श्रावितम्, प्रतीकारस्त्वस्मदधीन इत्याह—

पिता वृद्धो मान्यस्त्वमसि मतिमान्कृत्यविदिति
स्वदुःखं प्रोक्तं ते तदिह बहुभिर्हेतुभिरिह ।
अहं कर्णो दुःशासनसुबलजौ चापि नियतं
समर्थाश्चत्वारो ह्यभिलषितसिद्ध्यै किमपरैः ॥ ९३ ॥

**पितेति** । स्पष्टम् ॥

ननु कथं चत्वार एव भीष्मद्रोणादीनां सत्त्वात्तत्राह—

गुरुर्द्रोणः स्नेहं वहति कपिकेतावतितरां
स भीष्मोऽपि प्रायः कलयति मुदं धर्मतनये ।
प्रकारैः सर्वैस्तान्भजति विदुरः पाण्डुतनया-
नुदासीनस्त्वं चेदहह विधिरेवाद्य कुटिलः ॥ ९४ ॥

**गुरुरिति** । स्पष्टम् ॥

वचः साधिक्षेपं नृपतिरिति पुत्रस्य मनसा
विचिन्त्य ज्ञात्वार्तं भृशमनुनयन्प्राह मतिमान् ।
तवापि क्षोणीशाः सुत भुवि विनेयाः क्रतुवरं
त्वमप्येवं कर्तुं प्रभवसि सहायैः परिवृतः ॥ ९५ ॥

**वच इति** । अधिक्षेपस्तिरस्कारस्तत्सहितम् । अनुनयप्रकारमाह—तवापीति ॥

सहायानेवाह—

अहं भीष्मो द्रोणस्तदनु तनयोऽस्याङ्गनृपतिः
प्रियोऽयं ते दुःशासन इह विधेयाः सविदुराः ।
तथान्ये शल्याद्या मगधमरुकर्णाटपतयः
कलिङ्गाः काम्बोजा अपि बत तवाज्ञापरवशाः ॥ ९६ ॥

**अहमिति** । गुरोस्तनयोऽश्वत्थामा ॥

क्रियन्तां संभारा विविधवसुभाराश्च यजन-
क्षितिः सम्यङ्क्षेया विविधशुभयूपैः परिवृता ।

समाहूय व्यासप्रभृतिमुनिवर्यानथ शुभे
मुहूर्ते दीक्षाया ग्रहणमिह कर्तुं कुरु मनः ॥ ९७ ॥

**क्रियन्तामिति**। संभारा उपकरणानि। वसूनां द्रव्याणां भाराः॥

हिरण्यं सन्मुक्ता विविधमणयोऽलंकृतिशता-
न्यनर्घा रत्नौघा विविधवसनान्यन्ननिचयाः।
गजाश्वं गावश्च प्रचुरपयसो वत्ससहिता
द्विजेभ्यो देयाः स्युः क्रतुसदसि तुष्टेन भवता ॥ ९८ ॥

**हिरण्यमिति**। गजाश्वम्। सेनाङ्गत्वादेकवद्भावः। क्रतुसदसि यज्ञशालायाम्॥

पितुस्तद्वाक्यं स श्रुतिपथमथानीय पुनर-
प्यवोचद्भो राजञ्शकुनिरिह किंचित्कथयति।
समग्रां द्यूतेन श्रियमपहरामि ध्रुवमहं
छलात्कौन्तेयानामिति वितर तत्संमतिमिह ॥ ९९ ॥

**पितुरिति**। स्पष्टम्॥

न चात्र विदुरः प्रष्टव्य इत्याह—

यदि त्वं कार्येऽस्मिन्विदुरमनुपृच्छस्यनुपदं
निषेद्धा निश्चित्य व्यथितहृदसौ पाण्डवकृते।
तदा मृत्युर्मे स्याच्छरणमिह राजंस्त्वमपि च
ध्रुवं तुष्टो जीया विदुरसहितो हायनशतम् ॥ १०० ॥

**यदीति**। अनुपदं तत्कालम्। निषेद्धा निषेधं करिष्यति॥

राज्ञ उत्तेजनार्थं पुनरपि स्वदुःखमेवाह—

यदा द्वारभ्रान्त्या मणिरचितभित्तावधिविश-
न्नथाघातं प्राप्तः पतित इह तस्मिन्नवसरे।
भृशं संशोचन्तौ निभृतहसितौ दस्रतनयौ
गृहीत्वा हस्ते मां सृतिमदिशता तद्दहति हृत् ॥ १०१ ॥

**यदेति**। आघातं प्रहारम्। सृतिं मार्गम्। 'पन्थानः पदवी सृतिः' इत्यमरः। दस्रतनयौ नकुलसहदेवौ॥

अथ धृतराष्ट्रस्तन्निर्बन्धात्सर्वमङ्गीकृतवानित्याह—

अथैतन्निर्बन्धं गुरुतरमवेत्य क्षितिपतिः
सभां द्यूतस्यार्हां रचयितुमनुज्ञामथ ददौ।

समानेतुं पार्थान्विदुरमनुनीयाप्यनुचिते
निदेशे चक्रे स प्रवणमनयाधीनहृदयः ॥ १०२ ॥

**अथैतदिति** । अनुनीयापीति अपिर्भिन्नक्रमः । अनुचितेऽपि निदेशे यथाकथं-चित्प्रवणं अनुकूलं चक्रे ॥

स गत्वा पार्थानां सदनमवदद्यत्कुमतिना
कुरूणां नाथेन स्वहृदि निहितं द्यूतविषये ।
ततः श्रुत्वाह्वानं विदुरवचनात्पाण्डुतनयः
स्मितं कृत्वा वाक्यं मितमिदमवोचन्निपुणधीः ॥ १०३ ॥

**स इति** । स्पष्टम् ॥

विभो क्षत्तः सर्वं तव विदितमेवास्ति जगति
प्रकर्षं बुद्धेश्च त्वदधिगतवन्तो वयमिह ।
स राजा लोकानां स्थितिविदतुलप्राज्यधिषणः
कथं द्यूतक्रीडां कलहजननीं कन्दलयति ॥ १०४ ॥

**विभो इति** । क्षत्तः हे विदुर । त्वत् त्वत्तः ॥

समाहूतश्चाहं कथय न कथं यामि विमृश-
न्कलेर्द्यूते वासः सकलजनमेधाधिकलितः ।
तथापि त्वं यन्मे ह्युपदिशसि कार्यं हितविधौ
विधेयं वा नो वा तदिह करणीयं ध्रुवमिह ॥ १०५ ॥

**समाहूत इति** । 'आहूतो न निवर्तेत द्यूतादपि रणादपि' इत्युक्तेः । द्यूते कलेः कलहस्य कलियुगस्य वा वासः सर्वजनविदित इत्यर्थः ॥

किंचास्मिन्कार्ये दैवमेव प्रधानम्, तदधीनश्च जनो न स्वाधीनः। 'मतिरुत्पद्यते तादृग्व्य-वसायोऽपि तादृशः। सहायास्तादृशा एव यादृशी भवितव्यता ॥' इति वाक्यादिति विदुरः प्रत्याह—

तथा पार्थेनोक्तः सदसि विदुरः प्राह मतिमा-
न्मयासौ संदिष्टः सुतपरवशः कौरवपतिः ।
अभव्यं भव्यं वा परिणतिशुभं वाप्यशुभकृ-
न्न जानाति प्रायो व्यपगतविचारो नियतिभाक् ॥ १०६ ॥

**तथेति** । अशुभकृदिति कार्यस्य विशेषणम् । नियतिर्दैवम् । 'भाग्यं स्त्री नियति-र्विधिः' इत्यमरः ॥

इति श्रुत्वा धीमान्सहजपरियुक्तो द्रुपदजा-
समेतः स्वं सैन्यं सकलमुपदिश्यानुगमने।
रथारूढो दिव्याभरणवसनो धर्मतनयः
प्रयातः साशङ्को विदुरसहितो हास्तिनपुरम् ॥ १०७ ॥

**इतीति**। स्पष्टम् ॥

प्रविश्याथ प्रज्ञानयनभवनं योग्यविधिना
कृतातिथ्यः सर्वान्प्रणतिभिरथाभ्यर्च्य मुदितः।
निशां नीत्वा प्रातः शकुनिरचितं द्यूतसदनं
विवेश स्वैर्भीमादिभिरपि चतुर्भिः परिवृतः ॥ १०८ ॥

**प्रविश्येति**। स्वैः। भ्रातृभिरिति शेषः ॥

अथाहूतो दुर्योधनसहितगान्धारपतिना
नृपः सोऽक्षक्रीडामभजत पृथायाः प्रथमजः।
वृतो भीष्मद्रोणार्यमतनयबाह्लीककुरुराट्
कृपाश्वत्थामाद्यैर्विदुरनृपपुत्रप्रभृतिभिः ॥ १०९ ॥

**अथेति**। स्पष्टम् ॥

हिरण्यं कुप्याद्यं मणिनिचयमर्थौघमखिलं
निखर्वाब्जानेकप्रयुतनियुताद्यं यदपि च।
महीमश्वाञ्जात्यान्गिरिसमशरीरानपि गजा-
नजैषीद्दुर्द्यूते कुटिलतरबुद्धिः स शकुनिः ॥ ११० ॥

**हिरण्यमिति**। कुप्यमिति ताभ्यां यदन्यत्तत्कुप्यमित्यर्थः। अर्थानां ओघम्। 'अर्थरैविभवा अपि' इत्यमरः। जात्यानुत्तमजातीयान् ॥

ततोऽजैषीद्द्यूते नकुलसहदेवावनिलजं
गुडाकेशं पश्चाच्छकुनिकितवो धर्मतनयम्।
अथैनं प्राहैवं द्रुपदतनयां द्यूतविधिना
पणीकृत्यात्मानं परिकलय मोक्तुं जयसि चेत् ॥ १११ ॥

**तत इति**। परिकलय विचारय ॥

पराजैषीत्तामप्यथ शकुनिकर्णान्धतनया-
म्बिकापुत्रो हर्षं परतरमगुस्तत्र सदसि।

विहायैतानन्ये क्षितिनिहतनेत्रा विमनसः
स्रवन्नेत्राम्भोभिर्धिगिति परमं दुःखमभजन् ॥ ११२ ॥

**पराजैषीदिति** । अम्बिकापुत्रो धृतराष्ट्रः ॥

अथासौ संप्रेक्ष्य क्षितितलसमालोकनपरा-
ञ्जितान्द्यूते पार्थान्रवितनयमूचे कुरुपतिः ।
जितेयं दासीत्वं भजतु मम कृष्णा किमधुना
विलम्बः कार्येऽस्मिन्क्रियत इह सागच्छतु सदः ॥ ११३ ॥

**अथेति** । कृष्णा द्रौपदी । इह कार्ये किमधुना विलम्बः क्रियते । आगच्छतु आयातु ॥

अवाच्यं तद्दुर्योधनकथितमाकर्ण्य विदुरः
समुत्थाय क्रोधान्निखिलमनुजे शृण्वति सति ।
जगादोच्चैः क्रोधाद्वचनमिदमालोक्य च पुनः
समुद्भूतामन्दप्रतिघभरसंरक्तनयनः ॥ ११४ ॥

**अवाच्यमिति** । निखिलमनुज इति जात्यभिप्रायमेकवचनम् । प्रतिघः कोपः । 'कोपः क्रोधामर्षरोषप्रतिघा' इत्यमरः ॥

विदुरवाक्यं पञ्चभिराह—

अरे मन्द प्रज्ञानयनसुत किं ते व्यवसितं
न जानीषे शीर्षे निवसित इहाशीविषधरान् ।
किमर्थं कोपेनाकुलितमनसः पाण्डुतनया-
न्वृणीषे मन्दात्मन्मरणविधये स्वस्य सहसा ॥ ११५ ॥

**अरे इति** । स्पष्टम् ॥

न दासीत्वं प्राप्ता द्रुपदधरणीपालतनया
यतो न्यस्ता राज्ञा ध्रुवमियमनीशेन कुमते ।
कृतं ह्येतद्द्यूतं तव मरणबीजं कलय भो
समासन्ने मृत्यौ भवति विपरीता किल मतिः ॥ ११६ ॥

**नेति** । पूर्वं स्वस्य द्यूते विजितत्वादनीशत्वम् ॥

पुरैवास्मै राज्ञे कथितमसकृन्मे ध्रुवमहो
विनाशो द्यूतेऽस्मिंस्तव सुतशतस्यापि नियतः ।

कुलाङ्गारे पापे त्वयि शकुनिसापेक्षचरिते
निबद्धप्रेमायं भवतु फलभाक्पातकतरोः ॥ ११७ ॥

**पुरैवेति** । अस्मै राज्ञे धृतराष्ट्राय मे मया असकृत् बहुवारं किमुक्तं तदेवाह—अस्मिन्द्यूते तव सुतानां शतस्याप्यवश्यं विनाशः । भविष्यतीति शेषः । दुर्योधनं प्रत्याह—कुलाङ्गारे इत्यादि ॥

एतैः सह विरोधे महदनिष्टमित्याह—

दिशां जेता जिष्णुर्हतबकहिडिम्बादिसुभट-
प्रसिद्धव्यापारप्रथिततरकीर्तिः पवनजः ।
यमौ नित्यं शत्रुक्षपणकरणे बद्धनियमौ
न जानीषे किं रे यदिह विषमश्चासि सहसा ॥ ११८ ॥

**दिशामिति** । जिष्णुरर्जुनः । पवनजो भीमः ॥

तिष्ठन्तु भीमादयः, युधिष्ठिरक्रोध एव त्वां भस्मीकरिष्यतीत्याह—

न यावत्त्वां धर्माचरणशरणः साधुचरितः
क्षमी दान्तो मिथ्यावचनरहितो लोकमहितः ।
पुरा पश्यत्युग्रज्वलनकणमुग्दारुणदृशा
परं तावत्क्रूरं शमनवदनं पश्यसि न रे ॥ ११९ ॥

**न यावदिति** । पुरा पश्यति । द्रक्ष्यतीत्यर्थः । 'यावत्पुरा—'इति पुरायोगे लडर्थे लट् ॥

इति क्षिप्तोऽत्यन्तं विदुरवचनैरप्यनुसर-
न्स कर्णादीन्दुष्टान्मनसि न च खिन्नोऽभवदसौ ।
अथ प्रातीकाम्यं द्रुपदतनयायाः स्वभवन-
स्थिताया ह्वानार्थं ह्यदिशदवनीपालतनयः ॥ १२० ॥

**इतीति** । ह्वानमाह्वानं तदर्थम् । 'हूतिराकारणाह्वानं' इत्यमरः । प्रातीकाम्य इति दूतस्याभिधानम् ॥

स दूतस्तद्राज्ञो वचनसमकालं द्रुपदजा-
सकाशं गत्वोच्चैरवददथ दुर्योधनवचः ।
जितां द्यूते त्वामाह्वयति धृतराष्ट्रस्य तनयो
नियोक्तुं त्वां दासी भवसि पणिता द्यूतसदने ॥ १२१ ॥

**स दूत इति** । उच्चैरिति । अन्तःपुरे प्रवेष्टुमशक्यत्वादुच्चैरित्युक्तम् ॥

अथैनं पप्रच्छ द्रुपदतनया द्यूतसदने
नृपः कस्माद्धेतोर्बत पणनमेवं समकरोत् ।
क एवं लोकेऽस्मिन्कथय परिदीव्येद्धृतमति-
र्यथा पार्थः स्वार्थाकुशलहृदयो बुद्धिविधुरः ॥ १२२ ॥

**अथेति** । स्पष्टम् ॥

अथो दूतः प्राह प्रथितकुलजेऽसौ तव पति-
र्यदा भीमं चान्यानपि निजमथात्मानमकरोत् ।
पणद्रव्यं पश्चात्त्वमसि पणितातो नरपतिः
सभायामस्यां त्वाह्वयति धृतराष्ट्रस्य तनयः ॥ १२३ ॥

**अथो इति** । स्पष्टम् ॥

किमात्मानं पूर्वं परिपणितवान्मां नु नृपतिः
सभां गत्वा पृष्ट्वा पुनरिह समायाहि सविधे ।
ध्रुवं ज्ञात्वा पश्चाद्दयि नय सभां मामिति तया
नियुक्तो दूतोऽसौ नृपसविधमागात्पुनरपि ॥ १२४ ॥

**किमिति** । स्पष्टम् ॥
द्रौपदीवाक्यमाह—

अये राजन्कृष्णा वदति सकलान्वः पुनरियं
न राज्ञोऽनीशस्य प्रभवति मयि स्वत्वमधुना ।
अनार्यं चेत्सर्वैरधिगतमहो दैवहतकै-
र्विनाशः सर्वेषां ध्रुवमपरिहार्यो हि भविता ॥ १२५ ॥

**अये इति** । स्पष्टम् ॥
तदधिक्षेपवचः श्रुत्वा क्रुद्धः सन्दुःशासनं प्रेषितवानित्याह—

तथा दूतेनोक्तः सहजमथ दुःशासनमिदं
जगादासौ दुर्योधन इह मतेनाङ्गनृपतेः ।
अये दूतो भीमात्परमिह बिभेति त्वमधुना
बलादेनां कृष्णामुपनय करिष्यन्ति किममी ॥ १२६ ॥

**तथेति** । अङ्गनृपतेः कर्णस्य । मतेन संमतेन ॥

ततो गत्वा सोऽन्तःपुरभवनमेनामृतुमतीं
बलाद्धृत्वा केशेष्वहह शठबुद्धिर्नृपसुतः।
सनाथामप्याराद्दितरजनपत्नीमिव सभा-
मनैषीत्पार्थानां पुरत इह हा दैवहतकः॥ १२७॥

**तत इति**। स्पष्टम्॥

तथा नीतां कृष्णामरिकरगतामेकवसनां
रजोध्वस्तां वीक्ष्य क्षितिपतिसभा साश्रुनयना।
न यातुं न स्थातुं समशकदथो किंचिदपि वा-
भिधातुं श्रोतुं वा हृदयकृतधिक्कारवचना॥ १२८॥

**तथेति**। हृदये कृतं धिक्कारवचनं यया। दुर्योधनभयादित्यर्थः।

कर्णस्य द्रौपदीं प्रति वचनमाह द्वाभ्याम्—

अथावादीत्कर्णः किमिति न करोष्युन्नतमिदं
मुखाब्जं किं लज्जास्पदमिह भवत्याः कथय नः।
तदैवेयं लज्जा द्रुपदतनयेऽद्धा परिहृता
वृता यल्लोभेन ध्रुवमिह तदा पञ्च पतयः॥ १२९॥

**अथेति**। स्पष्टम्॥

इदानीं गान्धारीतनयवशगासीप्सितमहो
समृद्धं ते कृष्णे परिहर पतीन्दीनमनसः।
जितासि द्यूतेऽस्मिन्सुमुखि धृतराष्ट्रस्य धरणी-
पतेः पुत्रेणाद्य क्षममिह तदाज्ञानुसरणम्॥ १३०॥

**इदानीमिति**। स्पष्टम्॥

ततोऽसौ दुष्टात्मा निजमनुजमाहातिशठधी-
रिमां दुष्टां पापां विगतवसनामाशु कुरु भोः।
परीहासस्यैवं फलमनुभवत्वाशु कुटिला
पतीनां दासत्वं मम गतवतामद्य पुरतः॥ १३१॥

**तत इति**। स्पष्टम्।

अथासौ दुःखार्ता द्रुपदतनया वीक्ष्य दयिता-
न्परित्रातुं योग्यानपि समयबद्धान्विधिवशात्।

सभायामानीता शरणरहिता जालपतिता
कुरङ्गीव त्रासादृशतरमसौ कम्पमभजत् ॥ १३२ ॥

**अथेति** । समयबद्धान् सत्यमयपाशबद्धान् ॥

तदानीमनन्यशरणा सा भगवत्स्मरणं कृतवतीति कथयितुं कविर्मनसो दूतत्वं परिकल्प्य कथां रचयति—

विचारं चाकार्षीदहह न पिता नापि दयिता
न पुत्रा न भ्राता शरणमिह मेऽद्यास्ति न गुरुः ।
ऋते भक्ताधीनाद्यदुकुलवतंसादपर इ-
त्यथो स्मारं स्मारं मुररिपुमहं यामि शरणम् ॥ १३३ ॥

**विचारमिति** । स्पष्टम् ॥

स चात्यन्तं दूरे क इह तमथावेदयति मे
समासन्नं दुःखं भृशमपरिहार्यं प्रयतनैः ।
तदर्थं स्वान्तं तत्सविधमुपनेष्यामि निजमि-
त्यसौ संबोध्य स्वं द्रुपदतनया चित्तमवदत् ॥ १३४ ॥

**स चेति** । प्रयतनैः प्रयत्नैः । स्वान्तं मनः । 'स्वान्तं हृन्मानसं मनः' इत्यमरः ॥

अथान्यविषयासक्तिं त्यक्त्वा तत्परस्यैव चित्तस्य भगवति प्रवृत्तिरिति वक्तुं मनसः प्रशंसापूर्वकं स्वदूत्येऽनुकूलयितुं प्रार्थनामाह सप्तभिः—

हृषीकाणामीशं त्वमसि सकलानां त्रिभुवनं
क्षणाद्गन्तुं शक्तस्तदिह कलये दूत्यनिपुणम् ।
इतो गत्वा शीघ्रं मधुमथनपार्श्वे कथय मे
प्रवृत्तिं दीनाया ध्रुवमशरणाया हृदय भोः ॥ १३५ ॥

**हृषीकाणामिति** । 'इन्द्रियाणां मनश्चास्मि' इति गीतोक्तेः ॥

अयि स्वान्त क्लान्ता भृशमहमिह त्वां पटुतरं
विधाने निश्चित्य ध्रुवमनुनयामि प्रणयतः ।
हृषीकाणामीशं कथमिदमयोग्यं तव पुनः
करिष्ये दूतत्वं तदिति किल मा गा विधुरताम् ॥ १३६ ॥

**अयीति** । स्पष्टम् ॥

'न हि प्रयोजनमनुद्दिश्य मन्दोऽपि प्रवर्तते' इति न्यायात्तत्र प्रवर्तयितुं मद्दूत्यकरणे समाधिस्थयोगिचित्तागोचरस्य भगवतो दर्शनेन ते महाँल्लाभो भविष्यतीति महत्प्रयोजनमाह—

महांस्ते लाभोऽयं यदिह यमिनस्त्वां दृढतरं
निरुध्यान्तर्युञ्जन्त्यसकृदनुकूलं प्रणयतः।
समाधिस्था यस्य स्मरणविषये तं यदि पुरो
मनः साक्षात्पश्येः किमधिकमितस्तेऽस्ति कथय ॥ १३७ ॥

**महानिति**। यस्य स्मरणविषये योगिनस्त्वां दृढतरमन्तर्निरुध्यासकृद्वारंवारं युञ्जन्ति तं यदि त्वं साक्षात्पश्येस्ततोऽधिकं किमस्ति ॥

पूर्वोक्तं हृषीकेशत्वमेव प्रतिपादयति—

न नेत्रं रूपस्य ग्रहणकुशलं नापि रसनं
रसज्ञाने गन्धग्रहणविषये घ्राणमपि न।
न शक्ता त्वक्स्पर्शानुभवजनने श्रोत्रमपि च
त्वया हीनं शब्दग्रहणपटु न स्यात्किमपरम् ॥ १३८ ॥

**न नेत्रमिति**। मनःसंयोगं विना इन्द्रियाणां स्वस्वविषयग्रहणासामर्थ्यमनुभवसिद्धम्। तथा च महाभारतेऽश्वमेधपर्वणि मनोवाक्यानि—'न घ्राति मामृते घ्राणं रसं जिह्वा न वेत्ति च। रूपं चक्षुर्न गृह्णाति त्वक्स्पर्शं नावबुध्यते ॥ न श्रोत्रं बुध्यते शब्दं मया हीनं कथंचन। प्रवरं सर्वभूतानामहमस्मि सनातनम् ॥' इति। रसनं रसनेन्द्रियं रसज्ञाने शक्तं नेति योज्यम् ॥

त्वदनुचराणीन्द्रियाणि त्वां स्वस्वविषये नेतुं यतिष्यन्ते। तेषां मार्गं प्रवृत्तिरूपं विहाय निवृत्तिमार्गेण गमिष्यसि चेत्तत्प्राप्तिः सुलभा, नान्यथेत्याह—

रसज्ञघ्राणत्वक्श्रवणनयनानि प्रतिलयं
यतन्ते त्वां नेतुं यदपि च मनः स्वस्वविषयान्।
तथापि त्वं साधो परिहरसि चेद्धर्मविषयं
मदीयोऽयं चित्ताभिलषितविधिः सेत्स्यति तदा ॥ १३९ ॥

**रसज्ञेति**। 'इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः' इति गीतोक्तेः ॥

प्रवृत्तिमार्गे भयं प्रदर्शयति—

अये कामः क्रोधः प्रचुरतरलोभः स च मदो
महामोहः सेर्ष्योऽध्वनि किल वसन्त्यत्र नियतम्।

व्रजन्तं ते सार्थं प्रबलमपि मुष्णन्ति तदहो
मदीयं त्वं मागा हृदय कलयेदं हितवचः ॥ १४० ॥

**अये इति ।** कामादयश्चौरा मुष्णन्ति । धर्मरूपं धनमिति शेषः । हे हृदय, त्वं तत्र मा गाः । मदीयं इदं हितवचः कलय ॥

अस्मिन्मार्गे खेदशङ्कापि नेत्याह—

अहो खेदः सोढुं कथमपि न शक्योऽध्वजनितो
मयेति ब्रूषे चेच्छृणु हृदय यद्ब्रच्मि भवते ।
चिदानन्दाकारं भवजलधिसारं कलयतः
समारम्भो भावी श्रमनिकरनाशैकनिपुणः ॥ १४१ ॥

**अहो इति ।** स्पष्टम् ॥

किं च तत्समीपं गच्छतस्ते स एव श्रेयः कर्तेत्याह—

स ते मार्गे श्रेयो दिशतु शुभकृत्सर्वजगतां
यदीयं सौन्दर्यं हृदयहरणं गोपसुदृशाम् ।
मुमुक्षूणां ध्येयं विपदुदधिसंसारतरणि-
र्विपन्नानां चिन्तामणिरखिलवाञ्छार्पणविधौ ॥ १४२ ॥

**स ते इति ।** तरणिर्नौका ॥

पुनरपि शीघ्रं गमनं प्रार्थयते—

विलम्बं मा कार्षीः कुतुकतरलं क्वापि भव मा
त्यजात्यन्तं रूपादिषु च परमासक्तिमनघ ।
इतो गन्तव्यास्ति त्रिभुवनललामाद्भुतनिधिः
पुरी द्वार्वत्याख्या निखिलनगरीशेखरमणिः ॥ १४३ ॥

**विलम्बमिति ।** कुतुकं कुतूहलम् । गन्तव्यदेशमाह—इत इति । द्वार्वती द्वारिका ॥

अथ त्रयोदशभिर्द्वारिकां वर्णयति—

समुद्रेणाक्षिप्ता परित इह हेमाच्छवरणा
निधानं दिव्यानां समुपकरणानां मणिमयी ।
विचित्रा वृष्णीनां विजितसुरयानैर्गृहवरै-
र्नरैरप्यच्छाभैर्विविधमणिवस्त्रौघसुभगैः ॥ १४४ ॥

**समुद्रेति ।** वरणः प्राकारः । सुरयानं विमानम् ॥

जना यत्रागारेष्वतिलसितसन्मङ्गलमह-
प्रसङ्गात्संजातैरविरतमृदङ्गानकभवैः।
प्रतिध्वानैरारादपि जलदगर्जाधिकरवै-
र्मयूराणां नृत्योत्सवमनुभवन्ति प्रतिदिनम् ॥ १४५ ॥

**जना इति**। अतिलसितसन्मङ्गलरूपा ये महा उत्सवाः। 'मह उद्धव उत्सवः' इत्यमरः। तेषां प्रसङ्गात् संजातैः॥

यदागारेष्वभ्रंलिहविविधसौधोच्चशिखर-
स्थितैः कुम्भैरन्तःशुषिरविलसद्दीपकलिकैः।
विनिद्राणां कान्ताविरहविधुराणामुडुगण-
भ्रमः प्रावृट्तम्यामतितिमिरमय्यां भवति च ॥ १४६ ॥

**यदागारेष्विति**। विनिद्राणामिति। तत्र हेतुः—कान्ताविरहविधुराणामिति। प्रावृट्तम्याम्। 'रजनी यामिनी तमी' इत्यमरः। शुषिरं छिद्रम्॥

सुरद्रोः सत्पुष्पावलिललितसद्गन्धसुभृतै-
र्नितान्तं कस्तूरीमृगमदमहामोदलसितैः।
चतुर्भ्यो भागेभ्यो हृदय हरितां वायुभिरहो
समायातैः सार्था क्रियत इह सा गन्धवहता ॥ १४७ ॥

**सुरद्रोरिति**। कस्तूरीयुक्ता मृगाः कस्तूरीमृगास्तेषां मदः कस्तूरी तस्य यो महानामोदस्तेन लसितैः हरितां दिशां चतुर्भ्यो भागेभ्यः प्रदेशेभ्यः समायातैर्वायुभिः सा गन्धवहता गन्धवहत्वं सार्था यथार्था क्रियते इत्यन्वयः। 'आशाश्च हरितश्च ताः' इत्यमरः। 'रोमभिर्विरलैः स्वल्पैर्युतः कस्तूरिकामदः' इति केशवः। हृदयेति संबोधनम्। 'कस्तूरी स्यान्मृगमदः' इत्यमरः॥

विचित्रैरुद्यानैस्तिलकसहकारद्रुपनसा-
नसप्लक्षद्राक्षाबकुलसरलेन्द्रद्रुमधुकैः।
तमालश्रीपर्णीवरणकृतमालाक्षकदली-
शमीजम्बूजम्भक्रमुकलकुचाशोकसहितैः ॥ १४८ ॥

**विचित्रैरिति**। उद्यानैर्व्याप्तेति द्वितीयश्लोकेनान्वयः। कीदृशैरुद्यानैः। तिलकादिसहितैः। तिलकः क्षुरकः वृक्षविशेषः, सहकारद्रुः आम्रः, पनसः कण्टकीफलः, अनसो बन्धूकः, प्लक्षो वटः, द्राक्षा मृद्वीका, बकुलः केसरः, 'पूतद्रुः सरलः पूतिकाष्ठम्' इत्यमरः। इन्द्रद्रुः ककुभोऽर्जुनः। मधुकः प्रसिद्धः। 'मधूको मधुकोऽपि च' इति द्विरूपकोशः।

तमालः प्रसिद्धः, श्रीपर्णी वृक्षविशेषः, वरुणो वरणः सेतुः । 'आरेवतव्याधिघातकृत-मालसुपर्णकाः' इत्यमरः, अक्षो बिभीतकः, कदली रम्भा, शमी जम्बूश्च प्रसिद्धे, जम्भः जम्भीरा इति प्रसिद्धः, लकुचः "वहुहरः" इति भाषायाम् ॥

पियालद्रुश्लेष्मातकबदरनारङ्गविषम-
च्छदप्लक्षस्त्रंसिस्रुवतरुकदम्बादिललितैः ।
लताभिर्मालत्यादिभिरपि सुमौघातिललित-
प्रवालाभिर्व्याप्ता तव नयनयोर्यास्यति पथि ॥ १४९ ॥

**पियालेति** । 'राजादनं पियालः स्यात्' इत्यमरः । श्लेष्मातकः 'लहसोडा' इति भाषायाम् । विषमच्छदः सप्तपर्णः, प्लक्षः पिप्पलपादपः । तेन पूर्वश्लोके न पौनरुक्त्यम् । तथा च हैमः—'प्लक्षोऽश्वत्थे जटिनि पक्षके' इति । पीलुः प्रसिद्धः । स्रुवतरुर्विकङ्कतः स्रुवावृक्षः । कदम्बः प्रसिद्धः । सुमानामोघः । 'प्रसूनं कुसुमं सुमम्' इत्यमरः । 'प्रवा-लोऽस्त्री किसलये वीणादण्डे च विद्रुमे' इति हैमः । लताभिर्व्याप्तेति संवन्धः ॥

स्वकीयं कौशल्यं त्रिभुवनविचित्रं प्रथयता
सहस्राक्षप्राचीपतिधनदवासाँल्लघयता ।
कृता दिव्योपायैर्विविधमणिसंयोगघटिता
यदूत्तंसप्रीत्यै सुभग सुरतक्ष्णास्ति रचिता ॥ १५० ॥

**स्वकीयमिति** । सुरतक्ष्णा विश्वकर्मणा ॥

सभारामागारत्रिदशसदनब्राह्मणगृह-
प्रपावापीकूपाङ्गणविततरथ्यापरिवृता ।
अगण्यैः पण्यौघैर्भृतविपणिवीथीपरिसरा-
धरारत्नं रत्नाकरपरिवृता सा विजयते ॥ १५१ ॥

**सभेति** । 'सभा द्यूतसमूहयोः। शालायां च' इति हैमः । आराम उपवनम् । विपणिः पण्यवीथिका ॥

प्रविश्य त्वं तस्यां रुचिरकुरुविन्दाश्मगरुडो-
पलस्वच्छाच्छाभामरपतिमणीवज्रशकलैः ।
विना वर्षाकालं त्रिदशपतिचापायुतमतिं
दधत्यां दृष्टायां निजनयनयोः प्राप्नुहि फलम् ॥ १५२ ॥

**प्रविश्येति** । 'कुरुविन्दस्तु पीते स्यादतिरक्तेऽपि' इति केशवः । गरुडोपलो हरि-न्मणिः । अतिशयेन अच्छा अच्छाच्छातिनिर्मला भा यस्याः । अमरपतिमणी इन्द्रनील-

मणिः । 'मणिर्द्वयो रश्मिजातौ' इत्यमरे क्लीबमुक्तम् । वज्रं हीरकम् । एवं च पञ्चवर्णैर्मणिभिरिन्द्रायुधसाम्यम् ॥

यदीयान्यागाराण्युडुनिकरराट्कान्तमणिभि-
र्लसत्कुड्यान्यन्तःकरणजलमुञ्चि प्रतिलवम् ।
सदा कुर्वन्त्यम्भोधरसमयसुभ्रान्तिमतुलां
निशीथिन्यां चन्द्रोज्वलकरसितायां प्रतिदिनम् ॥ १५३ ॥

**यदीयानीति** । उडुनिकराणां तारकाणाम् । 'तारकाप्युडु वा स्त्रियाम्' इत्यमरः । निकरः समूहस्तस्य राट् इन्दुः । चन्द्रकान्त इत्यर्थः ॥

सुराधीशं जित्वा समिति सगणं यादवपति-
र्धरायामानीतं प्रथितगुणयुक्तं सुरतरुम् ।
निवासे सत्यायाः स्वयमथ समारोप्य जगता-
मधीशस्तां धन्यामकृत रविकन्यापतिरसौ ॥ १५४ ॥

**सुराधीशमिति** । सत्यायाः सत्यभामायाः । समारोप्य रोपयित्वा । रविकन्या कालिन्दी ॥

भ्रमद्भिः सौरभ्यादुपरि परितः षट्पदगणै-
र्दधद्भिश्छत्रस्य श्रियमनुपमां निर्जरतरुः ।
समस्तानां क्षोणीरुहवरगणानामवितथं
प्रभुत्वं यत्रासौ कथयति निजं स्वान्त सततम् ॥ १५५ ॥

**भ्रमद्भिरिति** । स्पष्टम् ॥

अथ तस्याः समग्रवर्णने सामर्थ्याभावमाह—

यदीयं सौभाग्यं कथयितुमलं चेत्किल भवे-
दनन्तो द्रष्टुं वा यदि दशशताक्षः प्रभवति ।
निवस्तुं च श्रीशो यदुकुलसुधांशुः स भगवा-
नवश्यं योग्यः सा कथय कथनीया कथमिव ॥ १५६ ॥

**यदीयमिति** । अनन्तः शेषः । दशशताक्ष इन्द्रः ॥

सहस्रं सौधानां भवति किल यत्षोडशमितं
सुयुक्तं चाप्यष्टोत्तरशतमितैर्दिव्यसदनैः ।

स तत्र प्रद्युम्नोद्धवहलधराक्रूरशिनिजो-
प्रसेनाद्यैर्युक्तो वसति किल यत्र प्रभुरसौ ॥ १५७ ॥

**सहस्रमिति** । 'सौधोऽस्त्री राजसदनम्' इत्यमरः ॥

अथ द्वाभ्यां श्रीकृष्णं वर्णयति—

दुकूलं हेमाभं निजकटितटेऽसौ परिदध-
त्सुकाञ्च्या रत्नानां निबिडमुपनद्धं यदुपतिः ।
दधानः श्रीवत्सं हृदि सुविलसत्कौस्तुभमणि-
र्महानन्दाम्भोधिर्नयनपथमायास्यति स ते ॥ १५८ ॥

**दुकूलमिति** । स्पष्टम् ॥

भगवच्चरणचिह्नान्याह—

ध्वजच्छत्राम्भोजाङ्कुशकुलिशसत्कुम्भसुधनु-
र्गदाशक्त्यङ्गुष्ठस्थितयवसुचक्रादिलसितौ ।
नखेन्दुज्योत्स्नाभिर्विधुतनिबिडध्वान्तनिचये
हृदि ध्यातौ भक्तैर्हृदय चरणौ द्रक्ष्यसि हरेः ॥ १५९ ॥

**ध्वजेति** । स्पष्टम्

समग्रतदीयाङ्गवर्णने स्वस्यासामर्थ्यमाह—

यदन्वेषे शेषा प्रभवति मनीषा न यमिना-
मुपश्लोके यस्य श्रुतिरपि च मूकेव भवति ।
तदीयान्यङ्गानि स्फुटमिह मनोज्ञानि सकला-
न्यहं वक्तुं शक्ता कथमिव भवेयं जडमतिः ॥ १६० ॥

**यदन्वेष इति** । स्पष्टम् ॥

अथ स्वसंदेशकथनप्रकारमाह—

निपत्य त्वं श्रीमच्चरणकमलाधः सुभग हृ-
न्मदीयं संदेशं कथय कथयाम्यद्य सकलम् ।
न चानन्दाम्भोधौ हरिचरणवीक्षामृतमये
निमग्नं भूत्वा मे कथितमखिलं विस्मर मनः ॥ १६१ ॥

**निपत्येति** । स्पष्टम् ॥

अयेऽहं दुःखार्ता शरणमुपयातास्मि भवतः
प्रणम्य त्वां याचे हृदय करणीयं समुचितम् ।
श्रवश्चक्षुर्घ्राणप्रभृतिकरणानां परवशं
न भूया नो चेद्धा ध्रुवमिह हताहं द्रुपदजा ॥ १६२ ॥

**अये इति** । श्रवः कर्णः । करणानामिन्द्रियाणाम् ॥

गृहीत्वा प्रेमोपायनमथ विनीतेन भवता
समाराध्यः स्वामी बत गरुडगामी मम विभुः ।
दयासिन्धुर्दीनोद्धरणधृतबुद्धिर्मदुदितं
विशेषादेवासौ हृदि करुणया धास्यति हरिः ॥ १६३ ॥

**गृहीत्वेति** । प्रेमरूपायनम् ॥

इति स्वान्तं वाक्यैर्निजमभिमुखीकृत्य सरल-
स्वभावा नेत्राम्भःस्रुतिसततधारार्द्रसुतनुः ।
तदीयध्यानोत्थप्रमदजनितोद्दामपुलका
जगाद श्रीकान्तं प्रति परमदुःखं द्रुपदजा ॥ १६४ ॥

**इतीति** । स्पष्टम् ॥

अथ स्वीयमनन्यनिवार्यमसाधारणं दुःखं निवेदयन्ती भगवतः स्वरक्षणत्वरायै बहुधा संबोधयन्ती प्रार्थयते—

दयासिन्धो बन्धो निखिलजगतो यादवपते
जगन्नाथ स्वामिन्व्रजजनविपन्नाशनपटो ।
बकीघातिन्वत्सासुरहर तृणावर्तशमन
प्रलम्बारिष्टघ्न द्विपदलन केशिप्रमथन ॥ १६५ ॥

**दयासिन्धो इति** । स्पष्टम् ॥

सुराधीशाखर्वप्रततमदगर्वप्रशमन
प्रभो लक्ष्मीकान्त व्रजजनसुधांशो मुररिपो ।
व्रजाधीश श्रीशामृतमथन तार्क्ष्यध्वज जग-
त्प्रभो विष्णो जिष्णुप्रियसख सखे गोकुलपते ॥ १६६ ॥

**सुराधीशेति** । स्पष्टम् ॥

मधुध्वंसिन्दैत्यान्तक नरहरे कैटभरिपो
हयग्रीव श्रुत्युद्धरण सुरसंघैकशरण ।
हिरण्याक्षप्राणापहरणपटो शूकर धरा-
धर स्वामिन्नागाधिपशयन कूर्माकृतिधर ॥ १६७ ॥

**मधुध्वंसिन्निति** । स्पष्टम् ॥

कलिद्रोहिन्सत्यप्रिय नरकहृच्छाल्वशमन
क्षितिध्रुग्राजन्यप्रबलभरहारिन्नरवर ।
त्रिलोकीसद्रत्नाच्युतसुभग गोपीरमण भो
परानन्दाम्भोधे निखिलजगदात्मन्सुरपते ॥ १६८ ॥

**कलिद्रोहिन्निति** । स्पष्टम् ॥

एवं संबोधनैः स्वामिमुखीकृत्य स्वदुःखं निवेदयति—

अगाधापद्बाधाकुलहृदमसाधारणकृता-
पराधा गान्धाराधिपसहितराधासुतवशाः ।
तुदन्तीमे धाराधरतुलितकान्ते दय धरा-
धराद्रेराधार प्लवधरण राधारमण माम् ॥ १६९ ॥

**अगाधेति** । अगाधा महती या आपद्बाधा तया आकुलहृदं मां असाधारणः कृतोऽपराधो यैः । हे धाराधरतुलितकान्ते दय प्लवस्य पोतस्य धरण मत्स्यावतारे तथा करणात् ॥

उदासीना दीना मृदुहसितहीना नतमुखी
निलीना स्वेष्वङ्गेष्वहह सुखहीना यदुपते ।
निहीना कीनाशाधिकभयकरैरन्धतनयैः
सभायामासीना द्रुपदतनया पीड्यत इह ॥ १७० ॥

**उदासीनेति** । कीनाशो यमः ॥

पवीनामाघातैरशुभजविधीनामिव गणै-
रहीनामुग्रैर्वा फणसमुदयैरेभिररिभिः ।
बिभेमि श्रीदीनोद्धरण किल हीनाद्य भवता
शिनीनामीशात्र श्वसिमि किल पीनाहिरिव या ॥ १७१ ॥

**पवीनामिति** । 'कुलिशं भिदुरं पविः ।' अशुभजानां विधीनां पापफलानाम् ॥

अयि क्षुद्रा रुद्रानुचरहृदयद्रावणविधि-
प्रगल्भा भद्राढ्य प्रभुवर हरिद्राभवसन ।
सुभद्राबन्धो द्रागरिगणसमुद्राभिपतितां
प्रबाधन्ते तन्द्रां परिहर महेन्द्रानुजविधौ ॥ १७२ ॥

**अयीति** । क्षुद्रा अधमाः । पुनः किंभूताः । रुद्रानुचरेति । एतेषामतिदारुणं कर्म दृष्ट्वा तेषामपि हृदयं द्रवतीति भावः । भद्रैः कल्याणैराढ्य पूर्ण । तन्द्रां आलस्यं परिहर ॥

अगाधे दुःखाब्धौ बत निरवलम्बेऽस्मि पतिता
भवाम्बोधेरुद्धारक कथमुदासोऽसि भगवन् ।
विलम्बं नाकार्षीरघहर गजाजामिलकृते
मदुद्धारे शक्तः किमसि न विभो दुष्टदलन ॥ १७३ ॥

**अगाध इति** । स्पष्टम् ॥

दुष्टदलनत्वमाह चतुर्भिः—

महामीनः सत्यव्रतमवति कूर्मोऽपि च भवा-
न्वहत्यद्रिं पृष्ठे धरति धरणीं शूकरवपुः ।
नृसिंहः प्रह्लादासुरजनकहृद्दारयति भो
बलेः प्राज्यं राज्यं कपटबटुरूपो हरति च ॥ १७४ ॥

**महामीन इति** । सत्यव्रतं राजानम् । अद्रिं मन्दराचलम् ॥

सुदुर्दान्तं धर्माद्विमुखमखिलक्षोणितलगं
निहन्ति क्षत्रं द्राक्शितपरशुमात्रोपकरणः ।
दशग्रीवं कुम्भश्रवणमपि सुग्रीवहनुम-
न्नलर्क्षाधीशाग्निप्रवरसुतयुक्तो विजयते ॥ १७५ ॥

**सुदुर्दान्तमिति** । कुम्भश्रवणः कुम्भकर्णः । ऋक्षाधीशो जाम्बवान् । अग्निप्रवरसुतो नीलनामा वानरः । विजयते । 'विपराभ्यां जेः' इत्यात्मनेपदम् ॥

स एव त्वं संप्रत्यपि हलधरभ्रातृसहितो
वचोमार्गातीतान्यतिशयितकर्माणि भगवन् ।
बकीघातादीनि स्मृतिमुपगतान्यप्यघहरा-
ण्यहो लोके विख्यापयसि कमलावल्लभ विभो ॥ १७६ ॥

**स एवेति** । संप्रत्यस्मिन्नवतारे ॥

निजं पूर्णानन्दानुभवमपि संत्यज्य भगव-
न्नितीत्थं सद्भक्तावनकरणदीक्षापरवशः ।
विधत्से रूपाणीत्यमरवर संचिन्त्य मनसा
दयालो त्वां हित्वा कतममुपयामीह शरणम् ॥ १७७ ॥

**निजमिति** । स्वानन्दानुभवादपि ते परोपकार एव मुख्य इति ॥

अये सर्वज्ञस्त्वं व्यसनमिदमल्पेतरमहो
विदित्वापि स्वामिन्मयि कथमुदासोऽसि भगवन् ।
भृशार्ताहं रोदिम्यतिशयितदुःखाब्धिपतिता-
विता श्रीमन्नान्यस्त्वमिह मृदुभावं भज मयि ॥ १७८ ॥

**अये इति** । अविता रक्षकः ॥

इतीदं संदेशं सकलमवधार्य प्रचलितुं
समुद्युक्तं यावद्द्रुपदतनयाचित्तमभवत् ।
तदैवान्तर्यामी निखिलजगतामार्तिहरणः
समुत्तस्थौ हित्वा शयनतलगां भीष्मकसुताम् ॥ १७९ ॥

**इतीति** । स्पष्टम् ॥

अये नाथ स्वान्तं किमिति तव चिन्ताकुलमिति
प्रवृत्तिं पृष्टोऽसौ सुमशरजनन्या सचकितम् ।
स्रवन्नेत्राम्भोभिः स्खलितवचसाङ्गेन पुलका-
चितेनासौ कृष्णाव्यसनमतिकष्टं समवदत् ॥ १८० ॥

**अये इति** । सुमशरजनन्या रुक्मिण्या ॥

अयि प्रद्युम्नाम्ब द्रुपदतनया कर्णशकुनि-
प्रधानेन प्रज्ञानयनतनयेनाद्य सदसि ।
समानीता भीता दशवदननीता परवशा
यथा सीता तद्वत्परिभवभुवं साद्य गमिता ॥ १८१ ॥

**अयीति** । प्रद्युम्नाम्बेति । 'अम्बार्थनद्योः–' इति ह्रस्वः ॥

तथा न प्रद्युम्ने त्वयि च मम वैदर्भि न तथा
न देवक्यां प्रेमा भवति वसुदेवेऽपि न तथा ।

न भामायां नो वाग्रज इह न चात्मन्यपि यथा
ह्यनाथायां तस्यां द्रुपदतनयायां सुदति मे ॥ १८२ ॥

**तथा नेति** । भामायां सत्यभामायाम् । अग्रजे बलदेवे । आत्मनि स्वदेहे ॥

न मत्तोऽन्यस्तस्याः क्वचिदपि कदाचित्प्रियतमः
सुतो भ्राता तातः पतिरपि महत्वास्पदमिह ।
अतस्तार्क्ष्यं स्मृत्वा झटिति विपदन्ताय सुदति
प्रयास्ये तत्राहं न हि समुचितं कालहरणम् ॥ १८३ ॥

**न मत्त इति** । ममत्वास्पदं प्रेमास्पदम् । झटिति शीघ्रम् । 'द्राग्झटित्यञ्जसाह्नाय-' इत्यमरः । कालहरणं विलम्बः ॥

इतीदं तामुक्त्वा मितवचनमत्यन्ततरलः
स्मृतायातं सद्यो गरुडमधिरुह्याथ समगात् ।
स तावद्दुष्टात्माग्रजवचनवश्यो द्रुपदजा-
म्बराकर्षं कर्तुं सविधमुपयातोऽभवदथ ॥ १८४ ॥

**इतीति** । अम्बराकर्षं वस्त्राकर्षणम् । तरलस्त्वरावान् ॥

तदालोक्य क्रोधानलकलितमूर्तिः प्रभुरसा-
वदृश्यो व्योमस्थः कलितकुतुकः कालकलनः ।
मदं दूरीकर्तुं सुबलतनयान्धात्मजरवि-
प्रसूतानां कंचिद्विधिमतुलमन्यं रचितवान् ॥ १८५ ॥

**तदेति** । कालं कलयतीति कलनः । अधुना न मारणीया एते अग्रे सर्वराज्ञां वधस्य कर्तव्यत्वात् ॥

प्रकारान्तरमेवाह त्रिभिः—

स कर्तुं भक्ताया द्रुपदतनयायाः प्रियमसा-
वकर्तुं गान्धारीसुतहृदयदुर्वाञ्छितमहो ।
तुरीवेमाभावे पटशतविधानेऽपि च तथा-
न्यथाकर्तुं शक्तः कुरुसदसि दृष्टो गगनगैः ॥ १८६ ॥

**स इति** । अन्यथाकर्तुमिति कारणं विनापि कार्यमुत्पादयितुमित्यर्थः । कर्तुमकर्तुम-न्यथाकर्तु समर्थ इति त्रितयं तदानीमेव संपादितम् ॥

सितैः पीतैः श्यामैर्हरितवसनैः स्वर्णरचना-
विचित्रैः सच्चित्रोल्लिखनपरमाश्चर्यजनकैः ।

दुकूलैः कौसुम्भैरतिललितमाञ्जिष्ठसलिला-
रुणैः सूक्ष्मैर्नीलैरपि वसनकृत्कौशलयुतैः ॥ १८७ ॥

**सितैरिति** । विचित्रैराश्चर्यजनकैः ॥

पलाशाभैर्नानाविधकिसलयाकारविजय-
प्रगल्भैः सत्सूचीरचितखगपुष्पादिरचनैः ।
समाच्छन्नानन्तैरपि विविधवासोविरचिता
तदा पाञ्चालीव ध्रुवमजनि पाञ्चालतनया ॥ १८८ ॥

**पलाशाभैरिति** । हरिद्वर्णैरित्यर्थः । 'पालाशो हरितो हरित्' इत्यमरः । किसलयानां नवपल्लवानां य आकारस्तज्जयप्रगल्भैः। सन्ति समीचीनानि यानि सूचीरचितानि खगानां शुकमयूरादीनां पुष्पाणां च विविधानां रचनानि 'कसीदा' इति भाषायां प्रसिद्धानि तानि येषु तैर्वसनैराच्छन्ना विविधवासोभिर्विरचिता पाञ्चाली कृत्रिमपुत्रिकेव । 'पाञ्चालिका पुत्रिका स्यात्' इत्यमरः । पाञ्चालो द्रुपदस्तस्य तनया द्रौपदी ॥

अथ तदानीं दुःशासनावस्थामाह—

अथाकर्षन्नस्या वसनमधिसंसद्धृदि वह-
न्नभिप्रायं दुष्टं शकुनिसहजादित्यजवशः ।
सभास्थैः साश्चर्यैः स्तिमितनयनैः पाण्डुतनयै-
र्नृपैरन्यैर्दृष्टः शिथिलितभुजो नान्तमगमत् ॥ १८९ ॥

**अथाकर्षन्निति** । संसदीत्यधिसंसत् । सहजो दुर्योधनः । अन्तं वस्त्राणां समाप्तिम् ॥

भ्रमन्नेत्रस्तन्द्राकुलितविकलाङ्गोऽतिविवशः
समुद्भूतस्वेदोऽनधिगतनिजाभीप्सितलवः ।
सदा मानी दुःशासन इति स दुर्योधनहिता-
भिलाषी पापात्मा न्यपतदधमस्तत्र सदसि ॥ १९० ॥

**भ्रमन्नेत्र इति** । तन्द्रा आलस्यं तया आकुलितानि विकलानि विह्वलान्यङ्गानि यस्य सः ॥

पाण्डवैस्तु तदानीं तत्प्रभावो ज्ञात इत्याह—

विना दीनोद्धारं भवजलधितारं व्रजवधू-
हृदो हारं रूपद्रविणजितमारं नरवरम् ।

कृपापारावारं क इह दयितां रक्षितुमलं
पृथापुत्रैरेवं मनसि नियतं तर्कितमभूत् ॥ १९१ ॥

**विनेति**। मारः कामः। 'मदनो मन्मथो मारः' इत्यमरः। तर्कितं विचारितम् ॥

प्रस्तुतां कथामुपसंहरन्सर्वेषां स एव शरण्य इत्याह—

इति स्वीयान्भक्तानवति बहुधाऽकारणसुहृ-
त्प्रदेशोऽयं कश्चित्कथित इह दृष्टान्तविधये।
रजःपुञ्जानुर्व्यां दिवि च गणयेद्योऽपि भगणं
न शक्तः सोऽप्यस्याखिलगुणगणान्संकलयितुम् ॥ १९२ ॥

**इतीति**। प्रदेशो दिक्प्रदर्शनम्। संकलयितुं वक्तुम् ॥

तं विहाय तव कुत्रापि स्थैर्यं न भविष्यतीति चित्तं प्रत्याह—

कलाः सर्वा ज्ञात्वा श्रमधनकृते चित्तजगति
क्षितीशानाराध्य द्रविणनिचयानर्जय बहून्।
अनेकैः शास्त्रोत्थैर्विमलय यशोभिर्जगदिदं
हरौ हित्वा प्रेम क्वचिदपि गतिर्नास्ति भवतः ॥ १९३ ॥

**कला इति**। स्पष्टम् ॥

तद्भजनं विना सर्वं व्यर्थमित्याह—

अविद्येयं विद्या भवति भगवद्भक्तिरहिता
न चेद्विष्णोः प्रेमप्रसृमरमहानन्दमहिता।
न तावच्चाञ्चल्यं त्यजति च मनोवृत्तिविहगी
न यावच्छ्रीकृष्णस्मरणरससिन्धौ निपतति ॥ १९४ ॥

**अविद्येति**। भगवद्भक्तिरहिता विद्याप्यकिंचित्करत्वादविद्यैव। 'सा विद्या तन्मतिर्यया' इत्युक्तत्वात् ॥

न केवलं कथामात्रमिदम्। उपदेशोऽप्ययं सर्वेषामित्याह—

इति सारं सारं तव गुणगणान्यादवपते
मनोदूतं योऽन्यस्त्वयि निजकृते प्रेषयति चेत्।
न मुञ्चस्येनं तत्प्रणयरशनाशृङ्खलितहृ-
द्विभो भक्ताधीन श्रुतिशिखरमृग्योऽपि भगवन् ॥ १९५ ॥

**इतीति**। स्पष्टम् ॥

त्वद्भजनं विना कथं मे संसारतरणं भविष्यतीति शोचन्नाह—

अये संसाराब्धौ महति पतितोऽघौघनिचितः
कलत्रापत्यस्वप्रणयविवशः सत्यरहितः ।
सदा लोभक्रोधस्मरपरवशो भक्तिरहितः
प्रभो संसाराब्धिं कथमिव तरिष्यामि भगवन् ॥ १९६ ॥

**अये इति** । अघौघेति । 'कलुषं वृजिनैनोघम्' इत्यमरः ॥

निःसाधनस्य मे करुणाकूपारेण भवतैवोद्धारः कर्तव्य इत्याह—

मदुद्धारे हेतून्यदि मृगयसे हन्त कठिनो
विधिः पापात्माहं विषयविवशो भक्तिरहितः ।
दयालुश्चेत्सत्यं यदि भवसि निःसाधनमपि
प्रभो दीनं मामुद्धर करुणया दुःखजलधेः ॥ १९७ ॥

**मदुद्धारे इति** । विधिः प्रकारः कठिनः । साधनहीनत्वान्ममेत्यर्थः ॥

सांप्रतं त्वच्चरितामृतश्रवणेनैव संसारतरणम्, नान्योपाय इत्याह—

तिरोधाय स्वीयं त्रिभुवनमनोहारि ललितं
स्वरूपं यद्ध्यानाद्भवति कृतकृत्यो जन इह ।
कथं मुच्येतासौ पुनरिति विचिन्त्य स्वचरिता-
मृताब्धिं यस्तेने स वसतु मदीये हृदि हरिः ॥ १९८ ॥

**तिरोधायेति** । स्पष्टम् ॥

स कोऽपि श्रीगोपीजनहृदयहारी प्रतिदिनं
सदा ध्येयो नान्यः प्लव इह भवाम्भोधितरणे ।
यदीयं नामेदं जगदघभिदादीक्षितमहो
स्मरन्भक्तः प्रेमामृतरसनिमग्नो विजयते ॥ १९९ ॥

**स कोऽपीति** । स्पष्टम् ॥

अत्र ग्रन्थे गुणालंकाररसाद्यभावेऽपि भक्तानां रुचिर्भगवद्गुणवर्णनासक्तानां सहृदयानां भविष्यत्येवेत्याह—

न संदर्भे प्रौढिर्न च गुणसमूहो न कविता-
परीपाकः कश्चित्पदसुघटनाप्यत्र न तथा ।

तथापि श्रीकान्तप्रगुणकथनेनात्र सुधियां
भवेच्चित्तासक्तिर्यदि फलवती स्यात्कृतिरियम् ॥ २०० ॥

**न संदर्भ इति** । स्पष्टम् ॥

भगवत्परायणैस्तच्चरितामृतश्रवणलुब्धैरिदमवश्यमादरणीयमेवेति प्रार्थयते—

यदि श्रीमन्नन्दात्मजचरणराजीवमधुनः
समास्वादासक्तो भवति भवतां चित्तमधुपः ।
कथायां वा तुच्छीकृतसुरसुधायां मधुरिपो-
र्मनोदूतं काव्यं शृणुत सरसं भक्तिरसिकाः ॥ २०१ ॥

**यदीति** । स्पष्टम् ॥

भङ्ग्यन्तरेण काव्योत्पत्तिमाह—

स्थिताद्वृन्दारण्ये तरणितनयातीरलहरी-
परीरम्भादम्भःपृषतयुजि वंशीवटतले ।
सकान्ताच्छ्रीकान्तादधिगतवती सङ्गमनघा
मतिर्मे प्रासूत ध्रुवमिह मनोदूततनयम् ॥ २०२ ॥

**स्थितादिति** । स्पष्टम् ॥

वेदेन्दुवसुशीतांशु(१८१४) मितेऽब्दे मार्गशीर्षके ।
सिताष्टम्यामिदं काव्यमर्पितं हरिपादयोः ॥

नराणां धौरेयः सकलविदुषां शेखरमणि-
र्वदान्यानामग्रेसर इह महाभाग्यसुभगः ।
कलानां सर्वासां सदनमतिसौजन्यललितो
गुणानामागारो जयति हरिदत्तः प्रभुरसौ ॥

तदीयाया निष्कारणशुभदयायाः परिणम-
त्प्रकृष्टोदर्काया जगति विदितः पात्रमिह यः ।
ततो योगक्षेमावधिगतवतस्तस्य च कवेः
कृतिर्विद्वद्वृन्दान्सुखयतु दयालून्मयि जडे ॥

इति श्रीमत्तैलङ्गान्वय**श्रीभूधरभट्टा**त्मज**श्रीरामकृष्ण**तनयपञ्चनदान्वय**व्रजनाथ**-विरचितं **मनोदूता**भिधं सहृदयहृदयाह्लादनापरनामधेयं काव्यं स्वकृत-मञ्जुभाषिण्या टीकया समेतं समाप्तम् ।

---

## गोस्वामिजनार्दनभट्टप्रणीतं

# वैराग्यशतकम् ।

कालिन्दीकलकूलकाननकृतक्रीडाकलापोल्लस-
द्गोगोपालकबालकैः प्रतिदिशं सानन्दमाविष्टितम् ।
वंशीनादवशीकृतव्रजवधूस्वान्तं सदाह्लादकं
सद्भक्त्या समुपास्महे वयमघध्वंसैकधीरं महः ॥ १ ॥

मोहं मुञ्च लुनीहि लोभलतिकां कामं च वामं त्यज
प्रेमाबन्धमपाकुरु प्रविततं प्रौढासु नारीषु च ।
संसारार्णवमग्नभक्तनिवहोद्धारक्षमं सादरं
देवं नूतनवारिवाहरुचिरं चेतः समाराधय ॥ २ ॥

एताः कानपि मण्डयन्ति पुरुषान्नानाविधैर्भूषणै-
रेताः कानपि वञ्चयन्ति च जनान्मिथ्यावचोभिः पुनः ।
एता वै रमयन्ति कानपि वरान्भावैर्मनोजोत्कटैः
स्वान्त भ्रान्त करोषि किं बत मुधा नारीषु हार्दं हि तत् ॥ ३ ॥

पुत्रो मित्रं कलत्रं वसु च वसुमती वेश्म वासश्च वीति-
र्नागो रत्नं रथौघः परिजननिवहो नैव यास्यत्यनु त्वाम् ।
तस्मादस्माकमेतन्मतममृतसमं सावधानः शृणु त्वं
सेवामेकां विधेहि प्रणतजनभयध्वंसधीरां मुरारेः ॥ ४ ॥

वित्ताशया नृपतयः परिसेवितास्ते
वित्ताशयैव खलु पर्यटिता धरेयम् ।
लब्धं मयाल्पमपि नैव धनं क्वचिद्वै
तृष्णेऽधुनापि कुटिले किल मां विमुञ्च ॥ ५ ॥

धरणी सकलावगाहिता धनलुब्धेन मयातिदुर्गमा ।
न धनं खलु लब्धमल्पकं ननु तृष्णा न तथापि गच्छति ॥ ६ ॥

पुत्रे सर्वगुणान्विते रतिकलासौन्दर्यशीलादिकै-
र्युक्तायां तु गुणैर्हि योषिति तथा चित्ते च नानाविधे ।

स्वान्तं नुः खलु सस्पृहं भवति वै श्रीकृष्णपत्पङ्कजे
चेदेवं तु भवेत्क्षणार्धमपि तत्स्यान्मुक्तिरेव स्फुटम् ॥ ७ ॥
गतं चरणयोर्बलं भुजबलं तथा दृग्बलं
बलं श्रवणयोस्तथा दशनजं बलं वा पुनः ।
परं प्रकृतिदुःखदा तदपि जीविताशा भृशं
नरस्य तु दिने दिने बलवती बलाज्जायते ॥ ८ ॥
पुत्रः पाति न पाति न प्रियतमा शौर्यं न पात्युद्भटं
बुद्धिः पाति न पाति नैव कविता नो पाति विद्याबलम् ।
यातं वै परलोकमार्गममितं दीनं जनं केवलो
धर्मः पाति ततस्तु धर्मकरणान्नान्यन्महीमण्डले ॥ ९ ॥
तटे भागीरथ्याः कुशरचितसत्पीठसुभगे
स्थितः स्नातः शुद्धो धृतविमलवस्त्रोऽमलमतिः ।
नरो नामं नामं स्मरति नवशीतांशुशकलो-
ल्लसन्मौलेर्वामां स तु भवति धन्यः क्षितितले ॥ १० ॥
यः सर्वत्र दयान्वितो भवति यः सर्वत्र वै सत्यवा-
ग्यः सर्वत्र कृतक्षमो भवति यः सर्वत्र स स्नेहदृक् ।
यः सर्वत्र सुरासुरार्चितपदद्वन्द्वाम्बुजामम्बिकां
नित्यं संस्मरति क्षितौ स विबुधैर्योगीश्वरः कथ्यते ॥ ११ ॥
बाल्यं गतं सकलमर्भकलीलयैव
तारुण्यमप्यहह सत्तरुणीविलासैः ।
वृद्धत्वमस्ति नर संप्रति सार्थकं त-
द्गङ्गातरङ्गसवनैः सफलं विधेहि ॥ १२ ॥
किं दानेन मुहुः कृतेन कृतया किं वा हरेः पूजया
किं वा धूर्ततया कृतैरनियमैर्नित्योपवासव्रतैः ।
किं यज्ञैर्बहुदक्षिणैरपि कृतैः श्रद्धाविहीनैः पुनः
स्वान्तं चेच्छुचि नास्ति पूरुष तदा किं तैर्वृथाडम्बरैः ॥ १३ ॥

कृतोर्ध्वपुण्ड्रो धृतशङ्खचक्रो वृन्दाक्षकैः कल्पितगात्रभूषः ।
करोति रामेति मुहुः प्रजल्पन्नरोऽतिधन्यः सफलं स्वजन्म ॥१४॥

सामर्थ्यं न तनौ मनागपि चलापाङ्गाङ्गनासंगमं
कर्तुं हन्त मयास्ति नेत्रपटुता सर्वापि नाशं गता ।
सर्वे प्राणसमा गताश्च सुहृदो दुर्दैवदग्धं मनो
नैवाद्यापि तथापि वाञ्छति जडं देहक्षयं मामकम् ॥१५॥

सन्ति क्षीणधनाः क्षितौ क्षितिभुजो दानाक्षमाः स्वामिनो
दुष्प्रापो हि वसुंधरातलगतः कष्टैर्महद्भिर्निधिः ।
द्रव्याधीनमहो सुखं न तु धनं कुत्रापि हा लभ्यते
तस्मान्मानस सांप्रतं समुचितां भक्तिं मुरारेः कुरु ॥ १६ ॥

तृणानि पशवः समे खलु वने सुखं भुञ्जते
पिबन्ति च बिलेशयाः किल सदागतिं सादरम् ।
न जीवति नरो वरो नियतमन्नमेकं विना
तदन्नमिह लभ्यते जगति कष्टपुञ्जैः परैः ॥ १७ ॥

याभ्यां नो हरिपूजनं खलु कृतं ताभ्यां कराभ्यां नु किं
नो वै येन विधीयते हरिनतिः किं तेन मूर्ध्ना किल ।
किं वा तेन मुखेन येन सुखदा विष्णोः कथा नोदिता
मन्ये धन्यतमं तदङ्गमिह यत्कृष्णार्हणार्हं भुवि ॥ १८ ॥

यः स्त्रीणां न करोति भोगमथवा नो ब्रह्मचर्यं दृढं
नो भुङ्क्ते विविधप्रकारमशनं नो वा फलं भूरुहाम् ।
नो वस्त्रं हि बिभर्ति नेत्रसुखदं नैणं तु चर्माथवा
तं दृष्ट्वा खलु भोगयोगविकलं स्वान्तं भृशं दूयते ॥ १९ ॥

जिता युद्धैर्युद्धोद्धुरतरविपक्षप्रतिभटा
जिता लोके लोकाः शुभतरगुणौघैश्च गुणिनः ।
कलावन्तः सर्वेऽप्यभिनवकलाभिश्च विजिता
विजेतुं वै मृत्युं मनुज तव यत्नं न कलये ॥ २० ॥

आलस्यं कुरु पापकर्मणि भव क्रूरः क्रुधस्ताडने
नैष्ठुर्यं भज लोभमोहविषये निद्रां समाधौ हरेः।
जाड्यं गच्छ परापवादकथने द्रोहं विधेहि स्मरे
दोषा एव गुणत्वमेवमखिला यास्यन्ति चेतस्तव ॥ २१ ॥

परिणतफलमूलैः शुष्कशाकैश्च नालैः
कथमपि च कदन्नैः पूर्णकुक्षेः सुजीर्णैः।
धनवसनविहीनस्यास्य लोकस्य नूनं
तदपि न विषयेच्छा मानसाज्जातु याति ॥ २२ ॥

ये दुर्जनाः सन्ति हि ते धनाढ्या ये सज्जनास्ते तु धनेन हीनाः।
दृष्ट्वा कलेः कौतुकमेतदुच्चैः स्वान्तं नितान्तं मम तापमेति ॥ २३ ॥

त्वगस्थिरुधिरामिषैः प्रचुरगूथमूत्रादिकैः
कृतां जलजजन्मना सकलदोषसीमां वधूम्।
अनङ्गशरजर्जरीकृतकलेवरः कातरो
नरो जडमतिर्मुहुः प्रियतमेति तां भाषते ॥ २४ ॥

केचिद्रागेषु मग्नास्तरुणहरिणदृग्वृन्दकेलीषु केचि-
त्केचिद्विद्याविनोदे सुललितकवितापद्धतौ चापि केचित्।
केचिद्दोशस्त्रवाजिव्रजगजवसनस्वर्णरत्नादिकेषु
द्वित्राः कृष्णाङ्घ्रिपद्मप्रचुरमधुझरीपानभाजो भवन्ति ॥ २५ ॥

किं वृक्षा विफलाः समं समभवन्किं कन्दहीना धरा
निर्मूलानि वनानि तानि किमहो जातानि सर्वाण्यपि।
लभ्यन्ते किमु न त्वचः क्षितिरुहां लोको न वस्त्रप्रियो
यल्लक्ष्मीमदिरोत्कटान्नरपतीनश्रान्तमासेवते ॥ २६ ॥

विश्वामित्रादयस्ते क्व नु खलु विगता योगशास्त्रार्थविज्ञा
युद्धे दक्षा बलिष्ठाः क्व नु खलु पटवः कर्णभीष्मार्जुनाद्याः।
ते ते ह्यन्ये महान्तः क्वचन रसकलाः सांप्रतं सन्ति यस्मा-
द्देहं चैवानपायं निजमवनितले मन्यसे मूढधीस्त्वम् ॥ २७ ।

मानापमानसुखदुःखवियोगयोग-
संपत्तिनैःस्व्ययुगलेषु समानबुद्धिः ।
मोहाम्बुपूरकलुषं च स एव नूनं
संसारवारिनिधिपारमुदारमेति ॥ २८ ॥

पक्कानि सन्ति विपिनेषु फलानि तानि
शीतानि निर्झरनदादिषु पुष्कराणि ।
ज्ञेयो भृशं जडतरः स तु यः प्रभूणां
सेवां करोति हि धनार्थमनेककष्टैः ॥ २९ ॥

न धनं न सुतो न सुन्दरी न गृहं नोपवनं न बान्धवाः ।
न ममास्ति हि किंचिदुच्चकैरिति यो वेत्ति न मोहमर्हति ॥ ३० ॥

रूपं सर्वमपाकरोत्यपनयत्युच्चैर्बलं देहजं
ज्योतिर्नाशयति स्फुटं नयनयोः क्षामां करोति क्षुधाम् ।
अङ्गानामपि तानवं वितनुते व्याहन्ति शौर्यादिकं
लोकाय प्रददाति हन्त नियतं किं किं न कष्टं जरा ॥ ३१ ॥

भवति कलहो येनान्योन्यं द्वयोरनुरक्तयोः
प्रसरति पुनर्येनाकीर्तिर्महीवलयेऽखिले ।
भुवनविदितं पुण्यं स्तोकं नयेन हि जायते
मनुज नियतं तं वै लोभं परित्यज दूरतः ॥ ३२ ॥

क्रोधेनैव कृताजयः खलु मृतास्ते कौरवाः पाण्डवाः
क्रोधेनैव सती जुहाव मखजे कुण्डे स्वकीयां तनुम् ।
क्रोधेनैव समं गतं यदुकुलं मैरेयपानाकुलं
क्रोधो बोधरिपुर्विधातुमुचितस्तस्मान्न विज्ञैर्नरैः ॥ ३३ ॥

सन्ति त्वद्धाम्नि ते ते जवजितपवनाश्चारुवर्णास्तुरंगा-
स्ते ते दानाम्बुधारामलिनतरकराः प्रोन्नता दन्तिनश्च ।

---

१. 'मैरेयं धातकीपुष्पगुडधानाम्बुसंहितम्' इति माधवः.

रत्नस्वर्णादिकानां नरवर निवहा भान्ति ते ते च नूनं
मद्देहे निस्पृहत्वं भवति हि सकलं येन तत्पांशुकल्पम्॥ ३४
किं कुर्वन्ति फलाशनं न विहगाः किं नो तवो (?) भुञ्जते
दध्यादीन्यनिलं पिबन्ति किमु नो सर्पा विषेणोद्धुराः।
स्यादेवं यदि वै व्रती व्रतधरास्ते स्युस्तदा निश्चितं
तस्माद्यः सुकृती स याति सुखदं लोकं हरेर्ज्ञानवान्॥ ३५।

मा भक्ष्यचिन्तां कुरु भक्ष्यदाता स एव येनास्ति कृतं हि जन्म।
तं देवमाराधय पूरुष त्वं न स्याद्यदाराधनतस्तु जन्म॥ ३६॥

गमयसि समयं किमेवमेतैर्बत विषयैः क्षणभङ्गुरैः समस्तैः।
अनुपमसुखदं तमेव देवं हृदय भजामि नवेन्दुखण्डचूडम्॥ ३७॥

पिबति सलिलं गाङ्गं भुङ्क्ते सुधाकरनिर्मलं
बिसमथ तनुं वस्ते नव्यैर्धराभववल्कलैः।
भ्रमति हरिणैः सार्धं स्वैरं घने विपिने हि यः
स तु नरवरो देहान्ते तैः सुरैः सह मोदते॥ ३८॥

न दातुं यः शक्तः कलुषहरदानानि नियतं
न वा कर्तुं नाकप्रदमखविधानं बहुविधम्।
स हीनः सर्वैस्तैरहह खलु सांसारिकसुखै-
र्नरो दिष्टं व्यर्थं गमयति विनैकां हरिनुतिम्॥ ३९॥

पुत्रमित्रवसुबन्धुपुरंध्रीग्रामधामरहिताः किल लोकाः।
हन्त तेऽपि न भवन्ति विरक्तास्तेन मे भवति चेतसि चित्रम्॥ ४०

चपलाचपलं हि जीवितं विषयाः सन्ति समे विषोत्कटाः।
जडबुद्धिरसौ तथाप्यहो न जनो मुञ्चति तान्मनाक्क्वचित्॥ ४१

हन्तुं केचन सन्ति मत्तकरिणां वृन्दं समर्थाः क्षितौ
सिंहं केचन कुम्भिकुम्भनिवहप्रध्वंसधीरं पुनः।
शूराः केचन वज्रसारकठिनैः शस्त्रैर्युतं वैरिणं
कन्दर्पोद्भटदर्पदारणविधौ वीरा नरा दुर्लभाः॥ ४२॥

धत्से यद्रुचिराम्बराणि कुरुषे यद्भोगमेणीदृशां
यद्दानानि ददासि यासि तुरगैर्मत्तैर्गजेन्द्रैश्च यत् ।
तत्ते प्राक्तनपुण्यकर्मफलितं भूयस्तदेवाचर
स्वान्तं स्यात्पुनरन्यजन्मनि सुखं येनैव नानाविधम् ॥ ४३ ॥

शेते संप्रति भोजनं प्रकुरुते नारीजने तिष्ठति
क्षोणीशः समयोऽस्ति नैव नृपतिं त्वं रे कथं द्रक्ष्यसि ।
यत्रैवं कथयन्ति दुष्टमतयो दौवारिकास्तत्र य-
द्गच्छन्त्येव जडा जनाश्च नियतं तल्लोभविस्फूर्जितम् ॥ ४४ ॥

भूपास्ते रणकर्कशा युवतयः सौन्दर्यसीमाश्च ताः
सद्विद्यास्ववशीकृताखिलबुधस्वान्ताश्च ते पण्डिताः ।
अन्ये चैव नटा विटाश्च कवयः सद्गायना नर्तका-
स्ते याता यदपाङ्गपातचकिताः कालाय तस्मै नमः ॥ ४५ ॥

इन्द्रस्त्वं नृप सुन्दरी तव शची पुत्रो जयन्तोपमो
गेहं भाति च वैजयन्तसदृशं नागोऽभ्रमोर्वल्लभः ।
इत्थं बोधकरैरसत्यवचनैः स्वैरं स्तुतः स्वं हरिं
वेत्ति प्रस्फुटविक्रमं स महिमा ज्ञेयो हरेर्मायिनः ॥ ४६ ॥

सद्विद्या सुकृतार्जितं वसु गुणग्रामाभिरामः सुतो
भार्या यौवनरूपशीलरुचिरा सेवापराः सेवकाः ।
मित्रं निष्कपटं नृपो गुणगणग्राही च दाता पुन-
र्नैतत्सर्वमवाप्यते हि मनुजैर्विष्णोः प्रसादं विना ॥ ४७ ॥

अचला कमला हि कस्य कस्य क्षितिपालः किल मित्रमस्ति लोके ।
इह वश्यतमा च कस्य वेश्या स्थिरमप्यस्ति च कस्य देहमत्र ॥ ४८ ॥

भोजनेन च धनेन सुदीर्घं जीवनेन तरुणीनिवहेन ।
जायते न मनसः परिपूर्तिस्तोष एव खलु तत्र विधेयः ॥ ४९ ॥

यस्य भालफलके यदलेखि ब्रह्मणा खलु सुखासुखयोश्च ।
तस्य तद्भवति तत्र न युक्तौ कर्तुमेव नर हर्षविषादौ ॥ ५० ॥

नैवाङ्गनाधरदलामृतमम्बुनो वा
पीतं मया सुखकरं सुरनिम्नगायाः।
संदेहसिन्धुलहरीतरलेन नूनं
कालः कलो हि सकलोऽप्यतिवाहितोऽयम् ॥ ५१ ॥

ननु न निहताः कामक्रोधादयो न च शत्रवो
न खलु भवनं नो वारण्यं मया परिसेवितम्।
न तु वनफलं नो वा भुक्तं मया विविधाशनं
नियतमखिलं जन्म स्वीयं कृतं हि निरर्थकम् ॥ ५२ ॥

पुण्यासक्ताः स्वयं ये सततमथ नरान्वीक्ष्य पुण्यैकनिष्ठा-
ञ्जायन्ते जातहर्षामृतरुचिरझरीक्लिन्नदेहाः समन्तात्।
सेवां कुर्वन्ति ये वै सुमविशिखरिपोः सादरं सावधाना-
स्तैरेवेयं धरित्री किल विमलतरैर्धार्यते पापगुर्वी ॥ ५३ ॥

येऽरण्ये विजने वसन्ति सततं सस्यानि ये भुञ्जते
ये नित्यं भुवि शेरते तृणमयं चास्तीर्य रम्यासनम्।
ये वै बिभ्रति वल्कलानि वनितां पश्यन्ति ये जातु नो
तानप्येष तपोधनान्विकलयत्युच्चैः प्रसूनायुधः ॥ ५४ ॥

स्तुत्या न तोषो हृदि यस्य रोषो न निन्दया यस्य तथास्ति नूनम्।
लाभे च हर्षो नहि नास्त्यलाभे दुःखं स मुक्तो धरणौ हि वेद्यः॥५५॥

किं नम्यं चरणाम्बुजं स्मररिपोः श्रव्या च का तत्कथा
ज्ञेयं किं च विधानमेव सकलं तत्पूजनस्योच्चकैः।
कः स्तुत्यश्च स एक एव सततं ग्राह्यं च किं कल्मष-
ध्वंसे श्रेष्ठतरं च नाम नियतं तस्यैव भूमण्डले ॥ ५६ ॥

स्वल्पो जीवितकाल एष रचितो धात्रा पुनर्नश्वरं
देहं हन्त कृतं च तत्र विविधा रोगाः पुनः कल्पिताः।
एकस्यापि गुणस्य कोऽपि नियतं नो पारगो दृश्यते
तस्मात्सर्वमपास्य मानस भज श्रीकृष्णपत्पङ्कजम् ॥ ५७ ॥

दारिद्र्यं विबुधजनेषु वीक्ष्य लक्ष्मीमक्षीणामबुधगणेषु निन्दितेषु ।
दृष्ट्वैतत्कलियुगकौतुकं नितान्तं हा बाधा मम हृदि जायतेऽतिगुर्वी ॥५८॥

सन्ति क्षोणीतलेऽस्मिन्निजजठरदरीपूरणेऽतिप्रवीणाः
कर्तुं स्वाभीष्टमेकं कृतविविधतरप्रोद्यमौघास्त्वनेके ।
ये वै कुर्वन्ति पूर्णां परजठरदरीं ये पराभीष्टवार्तां
ते तु त्रैलोक्यवन्द्या ध्रुवमवनितले दुर्लभाः सन्ति लोकाः ॥ ५९ ॥

दैवाद्यथा यस्य तु मृत्युरस्ति तथैव नूनं म्रियते स कालः ।
हन्तुं न शक्यस्तु निजेच्छया वै मत्तेन सूक्ष्मो मशको गजेन ॥ ६० ॥

पुष्पाशुगः कुसुमचापधरो विदेह-
श्चन्द्राबलाजनवसन्तसहायमात्रः ।
भस्मीकृतोऽपि हरनेत्रहुताशनेन
कामः कदर्थयति हन्त तथापि लोकम् ॥ ६१ ॥

पल्यङ्को विगतः स संप्रति धरा प्राप्ता हि पल्यङ्कतां
तन्नष्टं रुचिरोपधानमधुना जाता भुजा तत्पदे ।
तूली साप्यतुला किलाप विलयं दर्भावली तूलिका
जाताग्रे बत किं करिष्यति विधिर्नाहं तु जाने ह तत् ॥ ६२ ॥

धत्ते मौनमनर्गलं किल पिता लुब्धो यदर्थे पुन-
र्माता स्नेहभरं विमुञ्चति कलिं भ्राता करोति स्फुटम् ।
सर्वे बन्धुजना यदर्थमशुभं वाञ्छन्ति नानाविधं
भ्राष्ट्रे गच्छतु वह्निभारकलिते दुःखालयं तद्वसु ॥ ६३ ॥

कुर्यामहं दृढतरं भुवनाधिपत्यं
दद्यां च दानमखिलागतयाचकेभ्यः ।
हन्यां रिपूनिति नरास्ति तवाशयस्तु
को वेद किं मनसि तिष्ठति विश्वभर्तुः ॥ ६४ ॥

स मित्रं स भ्राता स च विमलबन्धुः स च पिता
स सूनुश्चैवास्ते स च विमलकीर्तिः परिवृढः ।

स एवास्मिन्काले सकलजनसर्वस्वमधिकं
  य एवेह प्राज्यं सततमथ दत्ते किल धनम् ॥ ६५ ॥
सन्त्येते मामकीनाः परिणतमतयः सेवकाः सावधाना
  ग्रामाश्चैतेऽतिरम्योपवनगृहसरःकूपवाप्यादियुक्ताः ।
अश्वाः शस्त्राणि नागास्तरुणमृगदृशो वक्ति लोको यदेवं
  ज्ञेया माया मुरारेरसुरविजयिनः सा मतिभ्रंशकर्त्री ॥ ६६ ॥
किं तृप्तिर्न हि जायते वनफलैः किं वल्कलैर्नावृतं
  देहं हन्त भवत्यथो न सलिलैस्तृष्यति किं नैर्झरैः ।
किं निद्रा समुपैति न क्षितितले यस्मादबुद्धिर्नरः
  कर्तुं हन्त तपः करोति न मनो मग्नो भवाम्भोनिधौ ॥ ६७ ॥
विद्यानवद्या पठिता न चित्तं वित्तार्जने वापि मया न दत्तम् ।
धर्मः कृतो नैव समस्तु कालो हा लोभलग्नेन वृथैव नीतः ॥ ६८ ॥
यदन्या न ज्ञानादसि विषशरैर्हंसि पुरुषा-
  न्यदन्येषामर्थे प्रचुरतरविघ्नान्प्रकुरुषे ।
अधर्मे यन्निष्ठा तव नर गरिष्ठास्ति सततं
  किमाकल्पं मूढ त्वमिह भुवने स्थास्यसि ततः ॥ ६९ ॥
प्राणायामपरायणो भवतु वा योगैकनिष्ठोऽथवा
  किं वा साधुसमाधिसाधनविधिप्रौढो भृशं पूरुषः ।
किं वा सिद्धरसाञ्जनाद्भुतमणिग्रामप्रवीणः परं
  मृत्युर्येन निवर्तते स भुवने नास्ति प्रकारः परः ॥ ७० ॥
येऽरण्ये निवसन्ति ये च सदने ये भुञ्जते वै फलं
  ये वान्नं सलिलं पिबन्ति सरजं ये ये च कौपं परम् ।
ये भूमौ खलु शेरते च रुचिरे पल्यङ्कमध्ये च ये
  ते सर्वे निधनं प्रयान्ति समये कस्मिन्विशेषोऽस्ति कः ॥७१॥
बाल्यं गतं सकलमर्भकलीलयैव
  तारुण्यमप्यथ गतं विविधैर्विलासैः ।
गङ्गातरङ्गकलनैरहमेतदुच्चै-
  र्वृद्धत्वमेव सकलं सफलं करिष्ये ॥ ७२ ॥

कायं मत्वा नश्वरं चञ्चलाभं चायुर्बुद्ध्वा भङ्गुरान्सर्वभोगान् ।
पारं गन्तुं विश्वसिन्धोर्विदग्धा योगाभ्यासे साधुबुद्धिं विदध्वम् ॥ ७३ ॥
निगमागमधर्मशास्त्रमार्गाः सकलाः सन्ति परस्परं विरुद्धाः ।
अत एव मतेः क्वचिन्न दार्ढ्यं भवति नृणामविवेकिनामिह ॥ ७४ ॥
काश्यां तिष्ठ सखे सुपर्वनिवहैर्नित्यं नुतायां भज
श्रीकण्ठं निजभक्तरक्षणविधौ दक्षं दयावारिधिम् ।
गाङ्गे वारिणि पापहारिणि कुरु स्नानं स्मर श्रीपतिं
त्वं कष्टेन विनैव मोक्षपदवीं प्राणात्यये प्राप्स्यसि ॥ ७५ ॥
विरमत बुधवर्याः संगमादङ्गनानां
कुरुत कलुषवृन्दध्वंसनोग्रं हि धर्मम् ।
न खलु निरयमग्नानुद्धरिष्यत्यजस्रं
कुवलयदलनेत्रा कौतुकं हन्त युष्मान् ॥ ७६ ॥
पापिष्ठाः सन्ति धान्यद्रविणसुतसुताबन्धुवर्गादियुक्ता
दुःखैरुग्रैरनेकैर्विदलितहृदयाः सन्ति धन्याश्च सर्वे ।
दृष्ट्वैतद्वैपरीत्यं कलुषसुकृतयोः शश्वदाश्चर्यभूतं
जानेऽहं वै निदानं कलियुगमपरं तत्र नो वेद्मि नूनम् ॥ ७७ ॥
लोभग्राहविमोहमीनकठिनक्रोधस्फुरद्वाडव-
क्रूरानङ्गकुलीरमत्सरजलैः पूर्णः समन्ताद्भृशम् ।
न ज्ञानाभिधमन्दरेण हृदयाम्भोधिर्दृढं मथ्यते
यावत्तावदियं न मुक्तिकमला केनाप्यहो लभ्यते ॥ ७८ ॥
दया दानं सत्यं परधनपरस्त्रीविमुखता
क्षमा श्रद्धा देवद्विजगुरुगणे भक्तिरतुला ।
अनौद्धत्यं तृष्णानियमनमनङ्गाविकलता
गणोऽयं वै लोकं नयति हरलोकं गतभयम् ॥ ७९ ॥
पुत्रं मुञ्चति मुञ्चति प्रियतमां सद्भ्रातरं मुञ्चति
स्वीयां मुञ्चति शुद्धवंशजनितां शुद्धां वधूटीमपि ।
सर्वं मुञ्चति चान्यदप्यथ निजां मूर्तिं बलान्मुञ्चति
क्षुद्रो मुञ्चति जातु नैव नियतं लोभं तु लुब्धो जनः ॥ ८० ॥

ग्रामारामकलत्रपुत्रममता त्यक्ता च दूरीकृता-
स्ते मत्ताः करिणो विचित्रवपुषस्ते ते मया वाजिनः ।
जीर्णायाचितलब्धनीरसतरेणान्नेन संप्रत्यहं
प्राणांल्लक्ष्मि बिभर्मि दीर्घतपसे मां मुञ्च मुञ्चाधुना ॥ ८१ ॥

आरामैः सदनैर्हयैर्गजवरैर्गानैः परिक्रीडनै-
र्वाद्यैर्यौवनगर्वमञ्जुलतरैर्वृन्दैश्च वामभ्रुवाम् ।
मुक्तिः स्याद्यदि तद्विहाय सकलं चैतत्प्रवीणा नराः
कर्तुं हन्त तपस्तु मुक्तिसुखदं कस्मादरण्यं गताः ॥ ८२ ॥

शिशिरकिरणो भानुर्वायुर्मही गिरयो नगाः
सलिलमनलो यच्चैवान्यच्चराचरमस्ति वै ।
तदखिलमिदं भस्मप्रायं भृशं प्रलयानले
भवति मनुज स्थास्यत्येतत्कथं तव वै वपुः ॥ ८३ ॥

निजमतिसमा विद्याधीता कृतं द्रविणार्जनं
प्रबलरिपवस्ते ते सर्वे जिता विविधोद्यमैः ।
तदपि च कृतं कर्तव्यं यद्बभूव धरातले
सरलमनसा संप्रत्येकां स्मरामि गिरीन्द्रजाम् ॥ ८४ ॥

भक्तिर्देवे स्मरारौ विजनघनवने चास्ति नित्यं निवासो
नाशं सर्वे गतास्ते मनसि मनसिजस्योत्कटा वै विकाराः ।
लब्धं पातुं पवित्रं जलममरसरित्संभवं कन्दभक्ष्यं
वैराग्यं जातमुच्चैर्मम जगति पुनर्नान्यदस्त्यर्थनीयम् ॥ ८५ ॥

पातालं यासि चित्त भ्रमसि च गगनं तन्निरालम्बमेकं
नानारण्यं च नित्यं व्रजसि विशसि रे गह्वरं भूधरस्य ।
व्यर्थं कालं त्वमेवं गमयसि सकलं निर्विवेकेन नूनं
मोक्षं क्ष्मारुट्फलं वै कलयसि न कथं तत्परब्रह्म दिव्यम् ॥ ८६ ॥

न धनं न सुतं न सुन्दरीं न च वाञ्छामि गृहादिकं सुखम् ।
नवनीरदनीलविग्रहे किल भक्तिं तु विहाय केशवे ॥ ८७ ॥

कृष्णं केचन न स्मरन्ति नितरां दारिद्र्यदुःखातुरा-
स्तं यत्केचन न स्तुवन्ति विविधै रोगैर्भृशं व्याकुलाः ।
तं नो केचन लोभलीनमनसः सम्यग्भजन्ते ततो
द्वित्रा एव तदङ्घ्रिपूजनरता मुक्तिं लभन्ते जनाः ॥ ८८ ॥

क्वचित्कन्या जाता क्वचिदपि च पुत्रः समभव-
त्क्वचिद्दिव्यं गानं क्वचिदपि विधानं मृतनृणाम् ।
क्वचिद्धास्यं रोदः क्वचिदपि भवत्यत्र भुवने
भृशं मूढस्तत्त्वं तदपि न हि जानाति मनुजः ॥ ८९ ॥

अस्मिन्भूवलये जनस्य महिमा भाग्येन संजायते
नो तत्रास्ति हि कारणं प्रयतता नैवाथ कश्चिद्गुणः ।
काकायाशुचिभोजिने हि वितरत्युच्चैस्तु लोको बलिं
मुक्ताहारपरायणाय शुचये नो हन्त हंसाय यत् ॥ ९० ॥

लुब्धः कश्चित्तु विश्वं धनमयमखिलं मन्यते कश्चिदुग्रैः
स्मारैः सर्वैर्विकारैर्विलुलितहृदयो वेत्ति नारीमयं च ।
त्यक्त्वाशेषप्रपञ्चः कलिकलुषभरत्रस्तचित्तोऽहमेको
मोक्षाकाङ्क्षी समग्रं किल भुवनतलं ब्रह्मरूपं हि जाने ॥ ९१ ॥

विरसं परिणाम एव लक्ष्म्यास्त्वमवाप्य क्षणभङ्गुरं सहायम् ।
कुरु मानव मा मुधा हि गर्वं वद लक्ष्मीः किल कस्य चास्ति वश्या॥९२॥

इह जगति जनस्य कस्य चित्ते न वसति सौख्यविधानमुख्यवार्ता ।
खलु भवति तदेव तस्य सर्वं भुवनपतिस्तु यदीश्वरः करोति ॥ ९३ ॥

निर्मूलं सकलं जगज्जडमते जानीहि कूलं कलं
गङ्गाया भज वल्कलं क्षितिरुहो दिव्यं दुकूलं कुरु ।
मूलं काननजं च भुङ्क्ष्व मधुरं संसारमूलं मुदा
देवं नीरदनीलविग्रहधरं नित्यं समाराधय ॥ ९४ ॥

ब्रह्मा भेजे मदनविकलः कन्यकां तां निजां वै
सीतां लङ्कामनयदतुलां रावणो रामजायाम् ।

चन्द्रो गत्वा वरगुरुवधूं हा कलङ्काङ्कितोऽभू-
त्कः कः कामप्रसरविवशो नैव निन्दां प्रपेदे ॥ ९५ ॥
रम्यं हर्म्यं च रम्यं सरसिजविपिनं तावदेवास्ति रम्यं
वृन्दं स्त्रीणां च रम्यं हयगजशकटीचन्द्रचन्द्रादिकं च।
उद्यानं चैव रम्यं विमलजलभृतं कूपवाप्यादि रम्यं
यावच्चित्तेऽनवद्या ननु न निविशते हन्त वैराग्यवार्ता ॥ ९६ ॥
पापालाने निबद्धः कुमतिशतकृतैरन्दुकैर्मेति मत्तो
लोभव्यालोलभृङ्गभ्रमणपरिलसत्तुङ्गकुम्भस्थलश्च।
कामाख्येनैव यन्त्रा सकुतुकमनिशं प्रेर्यमाणः पुरस्थं
ज्ञानाश्वत्थं निहन्ति प्रसभमिह मनोवारणोऽज्ञानदन्तः ॥ ९७ ॥
भिक्षान्नं बत भक्षणाय सदनं शून्यं निवासाय च
प्राप्तं क्वापि सुजीर्णमेव वपुषो वस्त्रं पिधानाय च।
पानायाम्बु कमण्डलौ क्षितितलं स्वापाय यस्यास्ति वै
तेनैवोत्कटदुःखजन्तुकलितस्तीर्णो भवाम्भोनिधिः ॥ ९८ ॥
पृथ्वीव्योमजलानिलानलगणैः कृतेन धात्रा स्वयं
त्वङ्मांसक्षतजास्थिवीर्यविकृतिप्रायेण निर्द्रापरम्।
कायेन क्षणभङ्गुरेण यदि चेल्लभ्येत मोक्षस्तदा
किं लब्धं न भवेज्जनैः कृततपःक्लेशैकलेशैः पुनः ॥ ९९ ॥
यः कर्ता जगतोऽस्ति यं प्रणमति प्रायः समस्तं जग-
द्येनैवाशु हता द्विषो बुधगणा यस्मै ददत्यर्हणाम्।
यस्मात्सिद्धिरनुत्तमास्ति न भवत्येनश्च यस्य स्मृते-
र्यस्मिन्सन्ति जगन्ति मेऽस्तु विपुला भक्तिस्तु तस्मिन्हरौ ॥ १०० ॥
**शृङ्गारशतके**[1] मग्नं समाविश्य निजं मनः।
**जनार्दनेन** विप्रेण **वैराग्यशतकं** कृतम् ॥ १०१ ॥

इति **श्रीगोस्वामिजगन्निवासात्मजगोस्वामिजनार्दनभट्टकृतं**
**वैराग्यशतकं** संपूर्णम्।

---

१. एतन्नामकं शतकमेतत्कविविरचितमस्माभिः काव्यमालायामेकादशगुच्छके मुद्रापितम्.

## काश्मीरकबिह्लणकविराजविरचितं

# बिह्लणकाव्यम् ।

ध्यात्वा गणेशमखिलागमसारभूतं
श्रीशारदां सुरनमस्कृतपादपद्माम् ।
किंचित्स्वकीयमतिसंस्फुरितेन नव्यं
काव्यं करोमि विदुषां सुखबोधनार्थम् ॥ १ ॥

स्वर्गावनीविमलमण्डलखण्डतुल्ये
भूमण्डले **महिलपत्तननामधेये** ।
वाराङ्गगुर्जरजनैः परिसेव्यमाने
भोगी वभूव नृपतिः किल **वीरसिंहः** ॥ २ ॥

चत्वार एव निजधर्मरताः सदैव
वर्णाश्च यस्य नगरे रजनीकरस्य ।
चञ्चद्गवाक्षपथि वीक्षणदृश्यवक्त्रै-
र्बिम्बोदयं प्रकटयन्ति दिनेऽपि नार्यः ॥ ३ ॥

यो वैरिवीरवरवारणदर्पसिंहो
विद्याविनोदविविधाभिरसः कलावान् ।
गाम्भीर्यधैर्यगुरुदानगुणैः स लोकं
पाति स्म **वीरनृपतिर्निजराजधर्मैः** ॥ ४ ॥

इत्थं नृपेण रजनीकरवक्त्रबिम्बा
राज्ञोऽप्यवन्तिनृपतेरतुलस्य पुत्री ।
पाणिग्रहेण विधिना विहिता सुनारी
मुख्या बभूव सकलासु वराङ्गनासु ॥ ५ ॥

कालक्रमेण विमलां कमलासमानां
चन्द्राननां नयननिर्जितपद्मपत्राम् ।
चन्द्रोदयेऽथ नृपतेः किल पट्टराज्ञी
जज्ञे कलां **शशिकलामिति** सत्यनाम्नीम् ॥ ६ ॥

सा वर्धते **शशिकला** शशिनः कलेव
राज्ञो विशिष्टतनया ह्यधिकैकभाग्या।
अल्पैर्दिनैः कतिपयैरपि राजधानी-
मागत्य वाक्यसुधया जनकं तुतोष ॥ ७ ॥

तां वीक्ष्य चारुवदनां चतुराननस्य
वाचामिव प्रचुरचञ्चुरबुद्धिशीलाम्।
बालामबालगुरुरूपवतीं नरेश-
श्चिन्तां चकार तनयाध्ययनाय नित्यम् ॥ ८ ॥

राजीवपत्रनयना नरराजकन्या
यल्लीलयापि वचनं मधुरं बभाषे।
**तद्वीरसिंहनृप**तेरमृतोपमानं
चित्ते बभूव सुखदायि दिवा निशायाम् ॥ ९ ॥

इत्थं नृवीरनृप**वीरन**रेशचित्ते
नित्यं चकार कविराजपदानि कन्या।
तातस्तदीयगुणगौरवगाढचित्त-
श्चिन्तां चकार सुतरां गुणिनं ददर्श ॥ १० ॥

श्री**राजहंसन**मितेन पुरोहितेन
राज्ञे निवेद्य विजिताखिलतर्कथेन।
**काश्मीरकः** कविरसौ गुणिनं दिदृक्षु-
स्त्वामागतः क्षितिप **बिह्लण**नामधेयः ॥ ११ ॥

मुक्तेन्दुकुन्दकुसुमस्फटिकावदाता
सर्वामरेन्द्रभुजगेन्द्रनरेन्द्रवन्द्या।
मन्त्रार्थतन्त्रजननी जननी श्रुतीनां
श्री**शारदा**स्ति विषयं तत आगतोऽयम् ॥ १२ ॥

कृत्वा नतिं विषयपूर्वमथाशिषं तां
जग्राह **वीरनृपतिः** कविराजतोऽपि।

मायाप्रपञ्चजगदर्णवभीतभीतः
सिद्धोपदेशमिव धर्मपरश्च लोकः ॥ १३ ॥

पृष्ट्वा समस्तकुशलं कुलदेवताया
आदिष्टवान्निजपुरोहितमस्य तृप्त्यै ।
यद्रोचते सुकवये पुरतः प्रभूतं
भोज्याम्बरादि वितताार यथोपदिष्टम् ॥ १४ ॥

तस्मै विहस्य कविराजमथ[1] क्षितीश-
प्रीत्या सुताध्ययनकारककोविदार्थी ।
दत्त्वा निकाममुदिताय मनोरथश्रीः
श्रीवीरसिंहनृपतिर्मुदमाससाद ॥ १५ ॥

स्नानानुलेपनमनोरमभोजनानि
दिव्याम्बराणि वहुमानपुरःसराणि ।
**काश्मीरकः** कविवरोऽथ निशम्य रात्रौ
प्रातः पुरोहितयुतो नृपतिं ददर्श ॥ १६ ॥

सद्यः प्रबन्धविधिना गुरुणा कवित्वं
यद्रम्यपद्यरचनामधुना कवीन्द्रः ।
विद्यापगागहनवासपयोनिधित्वं
धीरं तुतोष स यथा न तथान्य एव ॥ १७ ॥

एवं विलोक्य लसितार्थपदं कवीन्द्र-
मामन्त्र्य तत्र तनयां कवये निवेद्य ।
अध्यापय प्रमुदितो भगवन्निमां त्वं
कृत्वा प्रसादमथ **चन्द्रकला**मुवाच ॥ १८ ॥

उन्निद्रबुद्धिकुसुमः कविशेखरोऽयं
**काश्मीरकः शशिकले** कुरु पादपूजाम् ।
क्रीडां विहाय शुकसारिगतां सखीनां
शास्त्रं गृहाण वचनं **कविबिह्लण**स्य ॥ १९ ॥

---

१. 'कवये द्रविणं कवीश' इत्यपरपुस्तकस्थः पाठः.

रा[1]ज्ञा विमृश्य गुणिनो गुरुभावभक्तिं
व्यक्ताक्षरक्रमवतीमपि राजपुत्रीम् ।
दृष्ट्वा व्यपाठयदतिप्रयतः कवीन्द्रः
स्तोकैर्दिनैः **शशिकला** विदुषी बभूव ॥ २० ॥

सा प्राकृतानि विमलानि च संस्कृतानि
शास्त्राण्यधीत्य किल **चन्द्रकला** सुशीला ।
श्री**बिह्लणं** निजगुरुं प्रणिपत्य साक्षा-
त्तं हर्षयां नृपतिमास सरस्वतीं च ॥ २१ ॥

तस्या गृहे प्रवरकुङ्कुमपुष्पवासि-
कर्पूरगौरसरसागरुचन्दनाढ्ये ।
शृङ्गारसारगहनं किल कामशास्त्र-
मध्यापयत्यमल**चन्द्रकलां** कदाचित् ॥ २२ ॥

विज्ञातमन्मथकला स्मरबाणविद्धा
तस्यान्यजन्मरमणी नरनाथपुत्री ।
भाव्यर्थभावितमनोभवतुल्यकान्ता
कान्ते रसान्विदधति स्म दृशोर्विकारान् ॥ २३ ॥

प्रे[2]मादरात्तरलितेन विलोचनेन
वक्रेण चारुहसितेन सुधाधरेण ।

---

१. एतत्पूर्वमियान्पाठोऽपरपुस्तकेऽधिक उपलभ्यते—
'सेनापतिः स्वयमभाषत **वीरसिंह** हे नायक त्वरय सांप्रतमेव रम्यम् ।
सप्तावनिं सितगृहं सपरिच्छदं वै अध्यापनाय च **शशाङ्ककला**र्थमस्ति ॥
श्रुत्वा तदेति सुकृतं किल तत्कृतेन भोज्यानि तत्र वसनानि तथासनानि ।
यानानि कानि विविधा वरमुख्यसख्यो यत्प्रार्थितं स्वभुजसंनिहितं च चक्रे ॥
ज्ञात्वेति **वीरनृपतिः** स्वसुतां करेण धृत्वा कवेरथ समर्प्य शिरो ननाम ।
भूयः पुरोहितमथ स्वजनो न वा··· सर्वे भवन्तु सुखिनो हिमवाससश्च ॥'

२. एतत्पूर्वमियान्पाठोऽपरपुस्तकेऽधिक उपलभ्यते—
'इत्थं विलोक्य सुकविः पठतीं सुबालामन्तःपुरे जवनिकान्तरसंस्थितां ताम् ।
मारज्वराकुलितमानस एवमूचे मत्वात्मनः सुसदृशी कविनां स्वभावः ॥

ईषद्विजृम्भितकुचद्वितयेन बाला
विद्वांसमाशु वशिनं च वशीचकार ॥ २४ ॥
श्रीपद्मपत्रनयनां वरपद्महस्तां
पद्मप्रकृष्टचरणां शुचिपद्मगन्धाम् ।
तां पद्मिनीमिव सुपद्मनिकेतनां च
मेने कविः शशिकलामिव कामवल्लीम् ॥ २५ ॥
सा प्राह तं कविमवेक्ष्य मनोऽनुरागं
स्वामिन्द्वयं भवति सर्वजनानुशान्त्यै ।
तत्त्वं शिवस्य शिवदायि च कामतत्त्वं
त्वं संप्रति स्मरगुरुः स्मरयोग्यमत्र ॥ २६ ॥
इत्युक्त एव विजने स विचार्य सर्वं
गान्धर्वराजविधिना जगृहेऽथ पाणिम् ।
कामी युवा स्मरकलाकुशला च बाला
दैवात्तयोरघटितं घटितं बभूव ॥ २७ ॥
सा कामशास्त्रविधिना किल कामकेली-
लीलाविलासनिलयं चकमे कवीशम् ।
अन्योन्यनूतनसुयौवनमोहितां च
वाक्यैः सुधारससमैः स ररञ्ज बालाम् ॥ २८ ॥
राजप्रियोऽपि विविधागमपारगोऽपि
भुङ्क्ते स गूढचरितो नरराजपुत्रीम् ।

---

जातं सुजन्म विफलं भुवने नलिन्या दृष्टं यया न विमलं तुहिनांशुबिम्बम् ।
यावच्छ्रुतं सुवचनं सुकवेस्तयेत्थं किंचिद्विहस्य तुहिनांशुकला बभाषे ॥
दृष्टानि कोकमिथुनानि भवन्ति यैश्च सूर्यांशुभिर्जगदिदं निखिलार्थमेति ।
संपूर्णतापि शशिनश्च हि निष्फलैव दृष्टा यया न नलिनी परिपूर्णरूपा ॥
इत्थं निशम्य सुकविः सुवचोऽबलायाः प्रोवाच कामवशगः शृणु चन्द्रलेखे ।
मध्येऽत्र किं जवनिकां कुरुषे तदा वा हारीकुरुष्व तदिदं दयितेन्तरे नौ ॥
तस्याज्ञया जवनिकां शिथिलीविधाय वक्त्रं विलोक्य सुकवेर्नयनाभिरामम् ।
तस्थौ प्रणम्य शिरसा दधती कटाक्षस्नेहालसार्द्रनयनैः कटिदत्तहस्ता ॥'

शास्त्रोदितान्यनुदितानि च मोहनानि
पश्यन्नहर्निशमतीव निगूढचेताः ॥ २९ ॥
प्राह प्रियां स कविरेव मम प्रियेति
सा तं कविं कथयति स्म मम प्रियस्त्वम् ।
पृच्छाम्यहं यदि पुनः कथयोत्तरं मे
त्वं चापि मे कथय नाथ कवीशमुख्य ॥ ३० ॥

अङ्गणं तदिदमुन्मदद्विपश्रेणिशोणितविहारिणो हरेः ।
उल्लसत्तरुणकेलिपल्लवां सल्लकीं त्यजति किं मतङ्गजः ॥ ३१ ॥

निरर्थकं जन्म गतं नलिन्या यया न दृष्टं तुहिनांशुबिम्बम् ।
उत्पत्तिरिन्दोरपि निष्फलैव दृष्टा प्रहृष्टा नलिनी न येन ॥ ३२ ॥

पूर्णेन्दुबिम्बसदृशं च नृपात्मजास्य-
मानम्य विद्रुमलतामिव चुम्बनाय ।
कामप्रियव्रतनिवेदनयाभिधाना-
मालिङ्गनं सपुलकं प्रथमं चकार ॥ ३३ ॥

नीवीनिबन्धनविधानविमोचनाय
नाभिप्रदेशनिहितः कविना प्रकोष्ठः ।
कन्दर्पमन्दिरनिधानहरः करोऽस्य
रुद्धः स तस्कर इव क्षितिराजपुत्र्या ॥ ३४ ॥

आलिङ्ग्य गाढमबलामुपनीय शय्या-
मारोप्य वक्षसि रदेन निपीड्य चोष्ठम् ।
सोऽङ्गुष्ठकेन चरणाग्रभवेन वस्त्र-
माकृष्य चाकुलतया सुरतं चकार ॥ ३५ ॥

चन्द्रानना सुरतकेलिगृहीतवस्त्रा
नेत्रे निरुध्य च करद्वितयेन तस्य ।
आरोप्य मञ्जुशयने पुरुषायमाना
सानन्दयत्कविवरं गुणसर्जनेन ॥ ३६ ॥

सुकोमला चन्द्रमुखी च बाला प्रियं वदन्ती मधुरा च वाणी ।
कृशोदरी गौरविशालनेत्रा ददातु मे शं किल जन्मजन्मनि ॥ ३७ ॥

पद्मानना चकितबालकुरङ्गनेत्रा
मत्तेभकुम्भयुगलस्तनभारनम्रा ।
काश्मीरकेण किल संपुटिताभिधेन
बोभुज्यते स्मररणे नरराजपुत्री ॥ ३८ ॥

चञ्चत्प्रवालरुचिरारुणदन्तवासा
दन्तप्रभाविजितहारकदम्बशोभा ।
संतुप्यते तदनु पीडितकेन नाम्ना
कान्तेन कान्तिकरणेन नरेन्द्रपुत्री ॥ ३९ ॥

चूतप्रवालकरपल्लवकेलिरम्या
वामाङ्गना सुगतिनिर्जितराजहंसी ।
पद्मासनाद्यकरणैश्च मनोविनोदा
संगम्यते सुकविना क्षितिपालपुत्री ॥ ४० ॥

उद्यन्मृगेन्द्रतनुमध्यरुषा पराङ्गी
सर्वाङ्गदत्तसुमना सुभगा सुशीला ।
सा सिद्धतामुपगता नरराजपुत्री
स्त्रीनैपुणं सुकविना यदि शिक्षितत्वात् ॥ ४१ ॥

दोलागतेन करणेन कवीश्वरस्य
सा रम्यते रतिकलाकुशला निशीथे ।
सौन्दर्यरूपगुणगौरवमत्र सर्वं
तस्मै समर्पितमहो गुरुदक्षिणार्थम् ॥ ४२ ॥

उन्निद्रचम्पकविशुद्धसुवर्णवर्णा
कर्णान्तगस्मरसरोरुहचारुनेत्रा ।
रंरम्यते सुरतनागरिकेण नाम्ना
श्रीबिह्लणेन कविना नरपालपुत्री ॥ ४३ ॥

तद्धामसूचितमनङ्गरसप्रसाद-
चाटूक्तितत्क्षणवियोगसुदुःसहं च ।
प्रेम प्रवृद्धमितरेतरमप्रमेयं
कामं तयोरतनुमेयतरं बभूव ॥ ४४ ॥

उत्तुङ्गपीवरघनस्तनमण्डनेन
बिम्बाधरेण रमणद्विजखण्डितेन ।
अङ्गेन कान्तपरिदत्तनखव्रणेन
शुद्धान्तरक्षिभिरलक्षि परोपभुक्ता ॥ ४५ ॥

आः कस्य सांप्रतमहो कुपितो विधाता
कृत्वेति ते हृदि ततः प्रणिपत्य भूपम् ।
देवाभयं **शशिकला** पुरुषोपभुक्ता
सत्याय ते स गुरुरीक्षित एव नूनम् ॥ ४६ ॥

रक्षाजनेन कविनामनिवेदितेन
भूपो बभूव किल दोलितचित्तवृत्तिः ।
किं सत्यमस्ति कथितं वितथं तु किंवा
जीवप्रियं द्वितयमेव कविः सुता मे ॥ ४७ ॥

विद्यानवप्रयतमन्मथचाटुवाक्यैः
कन्दर्पकेलिकुपितां नरराजपुत्रीम् ।
पुष्पेषुबाणमधुरीकृतमानसोऽयं
कामी प्रसादयति **चन्द्रकलां** यथेष्टम् ॥ ४८ ॥

यावत्प्रसादललितां नृप आहृताङ्क
त्वं कां प्रसादयसि दुष्टचरित्रभावैः ।
श्रुत्वेति लक्षचरितो नृप चौर्यगुप्त्यै
कामी दृशं निजकरेण ममर्द शीघ्रम् ॥ ४९ ॥

उत्थाय संमुखगतोऽक्षिशिरोवगुप्तं
तं प्राह धीरमनसा नृपतिः सचक्षुः ।

कान्तापि तापयति यः कुपितो जनोऽयं
येन प्रसादयति देव विचारयार्थम् ॥ ५० ॥
वित्तां प्रिया च वचनं कथितं निशम्य
वातोद्धतेव सहसा कदली चकम्प ।
तूष्णींचकार रममाणनिरीक्ष्यमाणां
ताम्बूलशोभितकरापि वराङ्गनाभिः ॥ ५१ ॥
श्रेयो वरं मयि न जीवितनाथ नाथ
त्वं किं परित्यजसि मामकृतापराधाम् ।
सूक्ष्मा च धर्मगतिरस्ति विचारय त्वं
जीवामि किं रमण ते विरहान्मुहूर्तम् ॥ ५२ ॥
सौदामिनी भवति किं जलदे प्रयाते
चास्तं गते शशिनि तिष्ठति चन्द्रिका किम् ।
हे जीवितेश रतिदायक कामराज
जीवामि न क्षणमदर्शनतस्तवाहम् ॥ ५३ ॥
बाले त्वमेव शरणं मरणेऽपि भूया-
न्मृत्युर्भविष्यति जनस्य च मादृशस्य ।
भूयाद्विपत्तिरिह राजसुतानिमित्ते
धर्मस्तदेति सुहृदं हृदयं चकार ॥ ५४ ॥
निर्वासनं स्वनगरात्खरपृष्ठयानं
नाशं करस्य वधबन्धनकं समस्तम् ।
अङ्गीचकार कुसुमेषुनिपीडिताङ्गः
**काश्मीरको** नृपसुतारमणानुगूढः ॥ ५५ ॥

१. एतत्पूर्वमियान्पाठोऽपरपुस्तकेऽधिक उपलभ्यते—
'काव्यं कवेरिति निशम्य निरीक्ष्य चक्षुरर्थं विचार्य······परि प्रतीतः ।
श्रीभारतीविषयवासविलासलीलां कान्तिं जगाम स नृपः क्षमये तदुक्तम् ॥
पुत्री नृपस्य नरनाथमथ प्रणम्य प्रोवाच गद्गदवचः शृणु······तत्त्वम् ।
विद्याधिको मम गुरुर्गुणवत्सु भाति तं वीक्षितुं गुणवतामपि चित्तवृत्तिः ॥
**भूपे गतेऽथ वदतीन्दुकलां** सुभीतां कान्ते ममाप्युभयथा कुशलं दुरापम् ।
मृत्युस्त्वदीयविरहाद्यदि यामि देशं नाशस्तवात्र यदि वक्ति पिता तथैव ॥'

खेदं न याति दधति स्वजने न लज्जां
ये स्त्रीरताः किल भवन्ति नरा विमूढाः ।
सत्यां सतीं परममूर्तिमतीव गङ्गां
वामाङ्ग एव वहति त्वशिवः शिवोऽपि ॥ ५६ ॥
अङ्गी विधाय स शिवं च शिवेतरं च
**काश्मीरकः शशिकलां** रमते तथैव ।
भूयः कविः कतिपयेषु दिनेषु दूती-
वक्रेण तेन गदितश्च पुरोहितेन ॥ ५७ ॥
अलमतिचपलत्वात्स्वप्नमायोपमत्वा-
त्परिणतिविरसत्वात्संगमेनाङ्गनायाः ।
इति यदि शतकृत्वस्तत्त्वमालोकयाम-
स्तदपि न हरिणाक्षीं विस्मरत्यन्तरात्मा ॥ ५८ ॥
के वा न सन्ति भुवि वारिधरावतंसा
हंसावलीवलयिनो जलसंनिवेशाः ।
किं चातकः फलमवेक्ष्य स वज्रधारां
पौरंदरीं कलयते नववारिधाराम् ॥ ५९ ॥
श्रुत्वा कवीन्द्रवचनं नृपपूज्यविप्रो
राजान्तिकं पुनरगाच्छ्रुतसर्ववृत्तः ।
संप्राप्य भूपमितरेषु जनेष्वसत्सु
ह्यूचे मनोगतवचश्च पुरः पुरोधाः ॥ ६० ॥
**श्रीवीरसिंह** नृपवीर विपक्षवीर-
मत्तेभसिंह नरसिंह नरेन्द्रसिंह ।
वैदेशिकः स्वकुललाञ्छनतां विधत्ते
तद्वीक्ष्य किं क्षमसि किं श्रुतमेव नास्ति ॥ ६१ ॥
वंशार्चितेन कथिते वचने नृवीरो
जज्वाल वह्निरिव वातविवृद्धवेगः ।
आनीय तद्गृहसखीश्चरितं च पृष्ट्वा
ताभ्यः समस्तमपि भूपतिराससाद ॥ ६२ ॥

ज्ञात्वा स्वयं सकलमर्थमनर्थमूलं
प्रोवाच रोषवशगः शुभमन्त्रिणस्तान् ।
चौरस्य किं भवति मन्त्रिभिरेवमुक्तं
शूलाधिरोहणमिति क्रियतां च तस्य ॥ ६३ ॥
भूपाज्ञया सपदि वर्षधरैर्विगाढं
तं नीयमानमुपलक्ष्य जनस्त्ववोचत् ।
चौरः किमेष सुकविः प्रभुरत्नहारी
लोकोक्तिरेवमभवन्नगरे समस्ते ॥ ६४ ॥
द्वारस्थितामथ निरीक्ष्य नरेन्द्रपुत्रीं
नेत्रच्छटां प्रदधतीं स उवाच कान्ताम् ।
बालेऽधुना सुरवधूरमणाय यामि
तन्नागमिष्यति पुनः कविबिह्लणस्त्वाम् ॥ ६५ ॥
नार्यो नरेन्द्रतनयागुरुवीक्षणार्थे
कुर्वन्त्यतीव गमने सविलासलीलाम् ।
काचित्करेण दधती परिधानवस्त्रं
काचिद्विमुञ्चति करादपि कञ्चुकीं च ॥ ६६ ॥
योषिन्निजोष्ठगतरक्तिमवीक्षणार्थ-
मादर्शमेव दधती स्वकरेण चान्या ।
काप्यञ्जनार्धगुफितां कबरीं करेण
पीनोन्नतस्तनतटे त्वरितां विधाय ॥ ६७ ॥
एकं विधाय जतुरङ्गविरञ्जितं च
पादं द्वितीयमपरा परिहाय यान्ती ।
आनञ्ज नेत्रमपरा न सुकज्जलेन
तद्दर्शने गतमना हि ययौ गवाक्षम् ॥ ६८ ॥
तद्दर्शनाय विविधा द्विजराजयस्ता
नानाविधाश्च विबुधा अपि बाहुजाश्च ।

वैश्याश्च सेवकजना नृपसेवकाश्चे-
त्यन्ये प्रदुद्रुरिति गोविधिरेवमुक्त्वा ॥ ६९ ॥
ताम्बूलमेव दधती स्वकरेण कापि
हारावलीमधृत तत्र परा कृशाङ्गी ।
आलिङ्ग्य बाहुलतया स्वसखीं च कण्ठे
योषित्प्रगच्छति गवाक्षपथं सलीलम् ॥ ७० ॥
कामी स चापि नरराजनिदेशतस्तै-
र्वध्यावनीं प्रतिगुणैरभिनीयमानः ।
दृष्टो जनैः सकरुणं सुवराङ्गनाभि-
रुक्तं तदा शिव शिवेति विमोचयैनम् ॥ ७१ ॥
वध्यावनीमथ निरोपितशूलरौद्रां
नीत्वा कविं तु वधकाः कथयांबभूवुः ।
स्नानं विधेहि परिचिन्तय देवमाद्य-
मन्ते मतिर्भवति या सुकवे गतिः सा ॥ ७२ ॥
संसारदुस्तरपयोनिधितारणाय
ध्यायन्ति यं विविधयोगरता मुनीन्द्राः ।
यः सर्वलोकहृदयाम्बुजकोशहंस-
स्तं सर्वगं स्मर सदैव विमुक्तिहेतुम् ॥ ७३ ॥
लोकोक्तिषु स्थितवतीषु जनेषु सत्सु
तामेव पश्यति पुरोऽपि च पृष्ठतोऽपि ।
चित्ते स्थितामथ नरेशसुतां विचिन्त्य
ह्यद्यापि तामिह हि वेद्मि न देवमाद्यम् ॥ ७४ ॥
अद्यापि तां कनकचम्पकदामगौरीं
फुल्लारविन्दवदनां नवरोमराजीम् ।

---

१. अस्माभिः प्राप्तेषु त्रिषु पुस्तकेषु एकस्मिन्पुस्तके 'इति **बिह्लण**कविविरचितं नव्यं स्वकथासंवलितं पूर्वचतुःसप्तत्यपरनामकं लघुकाव्यं समाप्तम्' इत्युपलभ्यते, प्राचीनयोरित-रयोर्नेति.

सुप्तोत्थितां मदनविह्वलसालसाङ्गीं
विद्यां प्रमादगलितामिव चिन्तयामि ॥ ७५ ॥
अद्यापि तद्विकसिताम्बुजमध्यगौरं
गोरोचनातिलकपाण्डुरमध्यदेशम् ।
ईषन्मदालसविघूर्णितदृष्टिपातं
कान्तामुखं पथि मया सह गच्छतीं च ॥ ७६ ॥
अद्यापि तत्कनककुण्डलघृष्टगण्ड-
मास्यं स्मरामि विपरीतरताभियोगे ।
आन्दोलनश्रमजलस्फुटसान्द्रबिन्दु-
मुक्ताफलप्रकरविच्छुरितं प्रियायाः ॥ ७७ ॥
अद्यापि तां शशिमुखीं नवयौवनाढ्यां
पीनस्तनीं पुनरहं यदि गौरकान्तिम् ।
पश्यामि मन्मथशरासनपीडिताङ्गीं
गात्राणि संप्रति करोमि सुशीतलानि ॥ ७८ ॥
अद्यापि तन्मनसि संप्रति वर्तते मे
रात्रौ मयि क्षुतवति क्षितिपालपुत्र्या ।
जीवेति मङ्गलवचः परिहृत्य कोपा-
त्कर्णेकृतं कनकपत्रमनालपन्त्या ॥ ७९ ॥
अद्यापि तां मकरकेतुशरातुराङ्गी-
मुत्तुङ्गपीवरपयोधरभारखिन्नाम् ।
संपीड्य बाहुयुगलेन पिबामि वक्त्रं
प्रोन्मत्तवन्मधुकरः कमलं यथेष्टम् ॥ ८० ॥
अद्यापि तां कुटिलकोमलकालकेशी-
मुन्निद्रतामरसपत्रविशालनेत्राम् ।
प्रोत्तुङ्गपीवरकठोरपयोधराढ्यां
ध्यायामि चेतसि यथैव गुरूपदेशम् ॥ ८१ ॥

अद्यापि तद्विकचकुन्दसमानदन्तं
तिर्यग्विवर्तितविलोलविलोचनान्तम्।
तस्या मुखं मयि मनागपि विस्मरामि
चित्तात्कृतज्ञ इव हन्त कृतोपकारम्॥ ८२॥
अद्यापि तत्सरलमञ्जुलतुङ्गभासं
किंचित्स्मितोच्छ्वसितपाण्डुरगण्डभागम्।
पश्यामि पूर्णशरदिन्दुसमानकान्ति
कान्ताननं विकचपङ्कजपत्रनेत्रम्॥ ८३॥
अद्यापि तन्मदनकार्मुकभङ्गुरभ्रु-
दन्तद्युतिप्रकरकर्बुरिताधरोष्ठम्।
कर्णावसक्तपुलकोज्ज्वलदन्तपत्रं
तस्याः पुनः पुनरपीह मुखं स्मरामि॥ ८४॥
अद्यापि तां झटिति वक्रितकन्धराग्र्यां
न्यस्तैकपाणिकमलां स्वनितम्बबिम्बे।
वामांसपृष्ठलुलदुज्ज्वलकेशपाशं
पश्यामि मां प्रति दृशा बहुशः क्षिपन्तीम्॥ ८५॥
अद्यापि मामवगणय्य कृतापराधं
मां पादमूलपतितं सहसा चलन्तीम्।
वस्त्राञ्चलं मम करान्निजमाक्षिपन्तीं
मामेति रोषपरुषं वदतीं स्मरामि॥ ८६॥
अद्यापि तामभिविशालनितम्बबिम्बां
गम्भीरनाभिकुहरां तनुमध्यभागाम्।
अम्लानकोमलमृणालसमानबाहुं
लीलालसाञ्चितगतिं मनसा स्मरामि॥ ८७॥
अद्यापि तल्लुलितनादनिमीलिताक्ष-
मास्यं स्मरामि सुतरां सुरतावसाने।
तत्कालनिःश्वसितनिह्नुतकान्तकान्ति
स्वेदाम्बुबिन्दु परिपाण्डुरितं प्रियायाः॥ ८८॥

अद्यापि तां मयि कृतागसि धृष्टभावं
संभावयत्यपि मुहुर्निगृहीतवाचम् ।
अन्तर्निरुद्धगुरुकोपसबाष्पकण्ठीं
निःश्वासशुष्यदधरां रुदतीं स्मरामि ॥ ८९ ॥

अद्यापि तां समपनीतनितम्बवस्त्रां
पश्यामि मन्मथशरासनविह्वलाङ्गीम् ।
एकेन गुह्यनिहितेन करेण पाणि-
मन्येन नाभिकुहरादवतारयन्तीम् ॥ ९० ॥

अद्यापि तां रहसि दर्पणमीक्षमाणां
संक्रान्तमत्प्रतिनिधिं मयि पृष्ठलीनाम् ।
पश्यामि वेपथुमतीं च सुविभ्रमां च
लज्जाकुलां च दयितां च सविभ्रमां च ॥ ९१ ॥

अद्यापि तां सुरभिदुर्धरगन्धलोलं
धावन्तमास्यमनिशं गतिचञ्चरीकम् ।
किंचिच्चकोररुचिकुञ्चितचारुनेत्रां
पश्यामि केलिकमलेन निवारयन्तीम् ॥ ९२ ॥

अद्यापि तामितरतश्च पुरश्च पश्चा-
दन्तर्बहिः परित एव परिभ्रमन्तीम् ।
पश्यामि फुल्लकनकाम्बुजसंनिभेन
वक्त्रेण चारुपरिवर्तितलोचनेन ॥ ९३ ॥

अद्यापि तानि मम चेतसि संस्फुरन्ति
कर्णान्तसंगतकटाक्षनिरीक्षितानि ।
तस्याः सरत्तरकराणि मदालसानि
लीलाविलासबहुलानि विलोचनानि ॥ ९४ ॥

अद्यापि तां मयि कपाटसमीपलीने
मन्मार्गमुक्तदृशमाननदत्तहस्ताम् ।

मद्भावचिह्नितपदं मृदुकाकलीभिः
किंचिद्विमानमनिशं मनसि स्मरामि ॥ ९५ ॥
अद्यापि तत्तरलतारतताक्षमास्य-
मालिप्तचन्दनरसाहितपाण्डुकान्ति।
कस्तूरिकाकुटिलपत्त्रलताभिरामं
गण्डस्थलं हृदि गतं स्थिरयामि तस्याः ॥ ९६ ॥
अद्यापि तत्कृतकचग्रहमाग्रहेण
दन्तैर्मया दशनवाससि खण्ड्यमाने।
तस्या मनाङ्मुकुलिताक्षमलक्ष्यमाण-
सीत्कारगर्भमसकृद्वदनं स्मरामि ॥ ९७ ॥
अद्यापि तानि ममचेतसि विस्फुरन्ति
बिम्बोष्ठमृष्टपरिकीर्णशुचिस्मितानि।
पीयूषपूरमधुराणि त्वदुत्तराणि
वाक्यानि मन्मथभवानि मृदूनि यस्याः ॥ ९८ ॥
अद्यापि तां कनकपत्त्रसनाथकर्णा-
मुत्तुङ्गकर्कशकुचार्पिततारहाराम्।
काञ्चीनिपुञ्जितविशालनितम्वबिम्बा-
मुद्दामनूपुररणच्चरणां स्मरामि ॥ ९९ ॥
अद्यापि तां भुजलतार्पितकण्ठपाशां
वक्षस्थलं मम पिधाय पयोधराभ्याम्।
ईषन्निमीलितसलीलविलोचनान्तां
पश्यामि मद्वदनमुक्तमदं पिबन्तीम् ॥ १०० ॥
अद्यापि तानि परिवर्तितकन्धराणि
किंचित्क्षुतत्रुटितकञ्चुकजालकानि।
तस्या भुजाग्रलुलदुद्गलकुन्तलानि
चित्ते स्फुरन्ति मम वक्रविलोचनानि ॥ १०१ ॥

अद्यापि तत्सपरिवेषशशिप्रकाश-
मास्यं स्मरामि जडगात्रविवर्तनेषु ।
तद्वेल्लदुज्ज्वलकराङ्गुलिजालगुम्फ-
दोःकन्दलीयुगलकं दयितं प्रियायाः ॥ १०२ ॥

अद्यापि तामनुनत्यपि मय्यसक्तां
व्यावृत्तकेलिशयने शयतीं पराचीम् ।
निद्राकुलामिव ममाभिमुखीभवन्तीं
प्रातर्मदङ्गनिहितैकभुजां स्मरामि ॥ १०३ ॥

अद्यापि तां स्मितमुखीं पुरुषायितेषु
लम्बालकाकुलकपोललतां स्मरामि ।
आन्दोलनश्रमजलाकुलविह्वलाङ्गीं
श्वासोत्तरं वनिभृतं मुमुहुः शशाङ्गीम्(?) ॥ १०४ ॥

अद्यापि तां मयि गते चिरकोपयन्तीं
यान्तीं समागतवतीं परिवर्तमानाम् ।
ऊर्ध्वेस्थितां किमपि मञ्चतलं निषण्णां
शय्यां समाश्रितवतीमधिकं स्मरामि ॥ १०५ ॥

अद्यापि तामरुणयत्यरुणेन्तरिक्ष-
मापृच्छमानमपि नाम विधारयन्तीम् ।
उत्थाप्य निश्चलदृशौ मम निःश्वसन्तीं
चिन्ताकुलां किमपि नम्रमुखीं स्मरामि ॥ १०६ ॥

अद्यापि तां जघनदर्शनलालसेन
क्रान्तं मया इव(?)समाञ्चलमेव पश्चात् ।
पूर्वोक्तितामपरतो बहुशः क्षिपन्तीं
मन्दाक्षरं(?)कुचितसर्वतनुं स्मरामि ॥ १०७ ॥

अद्यापि तां सुनिभृतं पदमापतन्तं
मां द्वारि वीक्ष्य सहसैव निषण्णसुप्ताम् ।

मन्दं मयि स्पृशति कण्टकिताङ्गयष्टि-
मुत्फुल्लगण्डफलकां बहुशः स्मरामि ॥ १०८ ॥
अद्यापि तां प्रथममेव गतां विरामं
निर्भर्त्स्य रोषपरुषैर्वचनैर्मुहुर्माम् ।
आन्दोलितोद्धतनितम्बसहायवृत्त्या
संचिन्तयामि हृदयं सुदतीमभीक्ष्णम् ॥ १०९ ॥
अद्यापि तां विलुलिताकुलकेशपाशां
किंचित्समुन्मिषितघूर्णितजिह्मनेत्राम् ।
सुप्तोत्थितां विदधतीं मुहुरङ्गभङ्गं
पश्यामि चारुमधरं बहुशः स्मरन्तीम् ॥ ११० ॥
अद्यापि तां सुवदनां वलभीनिषण्णां
तद्गेहसन्मुखमहो खलु दृष्टमत्र ।
मर्मोत्तरं प्रियसखीषु कृतस्मितासु
लज्जां विलक्ष्य हसितां हृदि चिन्तयामि ॥ १११ ॥
अद्यापि तामनुनयत्यपि चाटु पूर्वं
कोपात्पराकृतमुखीं मयि सापराधे ।
आलिङ्गति प्रसभमुत्पुलकाङ्गयष्टिं
मामेति रोषपरुषे ब्रुवतीं स्मरामि ॥ ११२ ॥
अद्यापि तामुषसि तत्क्षणविप्रबुद्धां
निद्रालसां हृदि वहामि शताङ्गभङ्गाम् ।
जृम्भाविदीर्णमुखमारुतगन्धलुब्ध-
मुग्धभ्रमद्भ्रमरविभ्रमलोलपत्त्रम् ॥ ११३ ॥
अद्यापि तां प्रथमसंगमजातलज्जां
नीव्यां स्पृशत्यपि करे मम मन्दमन्दे ।
फूत्कारकम्पितशिखातरलं प्रदीपं
कर्णोत्पलेन निजिघांसुमहं स्मरामि ॥ ११४ ॥

अद्यापि तां समुपगम्य मयावृताक्षीं
कोऽयं वदेत्यभिहिता बहुशः सखीभिः ।
मातर्न विद्म इति सस्मितमुल्लपन्ती-
मुत्पन्नगल्लपुलकाकुलितां स्मरामि ॥ ११५ ॥

अद्यापि तां गतिनिराकृतराजहंसीं
धम्मिल्लनिर्जितमयूरकलापभाराम् ।
चक्षुःश्रिया हसितमत्तचकोरनेत्रां
संचिन्तयामि कलकण्ठसमानकण्ठीम् ॥ ११६ ॥

अद्यापि तां मदनमन्दिरवैजयन्ती-
मन्तर्मुखे मदधरोष्ठदलं विधाय ।
अङ्गैरनङ्गविकलैर्मम गाढमङ्ग-
मालिङ्ग्य केलिशयितां दयितां स्मरामि ॥ ११७ ॥

अद्यापि तामुपवने परिवारयुक्तां
संचिन्तयाम्युपगतां च महोत्सवाय ।
मां पार्श्वसंनिहितलोकभयात्सशङ्कं
व्यावर्तितेक्षणमनुक्षणमीक्षमाणाम् ॥ ११८ ॥

अद्यापि तामुरसिजद्वयमात्रमध्ये
भ्रश्यद्वलित्रितयलक्षितरोमराजिम् ।
ध्यायामि वल्गितभुजां विहिताङ्गभङ्गं
व्याजेन नाभिकुहरं मम दर्शयन्तीम् ॥ ११९ ॥

अद्यापि तानि मृदुसारसुभाषितानि
तिर्यग्विवृत्तनयनान्तनिरीक्षितानि ।
लीलारसाञ्चितगतानि सुविस्मितानि
तस्याः स्मरामि हृदि विभ्रमचेष्टितानि ॥ १२० ॥

अद्यापि तामसममीलितसाचिनेत्रां
लोलद्भुजां वलयझंकृतिशब्दहस्ताम् ।

वल्गत्कठोरकुचमुन्नमितभ्रुकर्णे
कण्डूयनं विदधतीं हृदि चिन्तयामि ॥ १२१ ॥
अद्यापि तां करिसमर्पितवामपाणि-
माकुञ्चितैकचरणाग्रनिरुद्धभूमिम् ।
स्कन्धावलम्बितभुजां पथि मां व्रजन्तं
पश्यामि बन्धुरितकन्धरमीक्षमाणाम् ॥ १२२ ॥
अद्यापि तां मयि दृशं तुदतीं स्मरामि
स्मेरां स्मरद्वरकरां मधुरां सुताराम् ।
अत्युद्भलां सुरतलां कुटिलां सुशीलां
निष्पन्दमन्दसमदप्रमदप्रसादाम् ॥ १२३ ॥
अद्यापि नोज्झति हरः किल कालकूटं
कूर्मो बिभर्ति धरणीं खलु पृष्ठसंज्ञाम् ।
अम्भोनिधिर्वहति दुःसहवाडवाग्नि-
मङ्गीकृतं सुकृतिनः परिपालयन्ति ॥ १२४ ॥
इत्थं कविः सुजनमध्यगतो विलासै-
र्नान्तर्विधैश्च रमयन्नृपसेवकाग्रे ।
ते प्रोचुराः कविवरेन्द्र तथा तवेय-
मस्मन्मनांसि हरतेऽन्यजनस्य नूनम् ॥ १२५ ॥
त्वं विद्वन्गुरुरेव वाडवजनैः पूज्यः सतां सर्वदा
किं कुर्मः कथयाम संप्रति वयं लज्जान्विताधोमुखाः ।
राजाज्ञां न करोति पण्डितवराधीनो यतः सेवकः
कः कोपं सहते पराभवपदं प्राप्नोति को मानवः ॥ १२६ ॥
भूपादेशकरास्तथा पुरजनाः शृण्वन्तु ते मद्वचः
पारत्रैहिकमेव यच्च तदहं जाने पदं निर्मलम् ।
तद्रूपा नृपवीरभूपतिसुता सा मे हृदन्तःस्थिता
ध्यायंस्तां गमिता निवृत्तिमधुना नार्यो न वेदैस्तुथः(?) ॥१२७॥

उक्तस्तदा नृपजनैः सुजनैस्तथान्यै-
भूयः कविः **शशिकलां** हृदि चिन्तयित्वा ।
निःश्वस्य तां प्रति ततान सुरस्य वाक्या-
त्त्यक्तो घृणां भयमपीह भविष्यमेतत् ॥ १२८ ॥

वेलाञ्चलं न्यस्य कुचाञ्चले मामालोकयन्ती नयनाञ्चलेन ।
इतो गता साध्वगता न जाने गेहं गता वा हृदयं गता मे ॥ १२९ ॥

येऽमी कूर्चकवासकङ्कणरणत्कर्णाष्टसीमन्तिनी-
हस्ताकर्षणविभ्रमे च सुहृदः प्राप्ताः परामुन्नतिम् ।
तेऽमी संप्रति यान्ति नायतभुजा भ्राम्यन्निशान्तक्षुर(?)-
क्षुण्णाः क्षोणितलेपनानि पुरतः प्राप्तापराधा इव ॥ १३० ॥

भवत्कृते चाञ्जनमञ्जुलाक्षि शिरो मदीयं यदि याति यातु ।
नीतानि नाशं जनकात्मजायै दशाननेनापि दशाननानि ॥ १३१ ॥

प्रासादे सा पथि पथि च सा पृष्ठतः सा पुरः सा
पर्यङ्के सा दिशि विदिशि सा चोर्ध्वतः सा ह्यधः सा ।
हृद्यन्तः सा बहिरपि च सा नास्ति दृश्यं द्वितीयं
सा सा सा सा त्रिभुवनगता तन्मयं विश्वमेतत् ॥ १३२ ॥

संगमविरहवितर्के वरमिह विरहो न संगमस्तस्याः ।
सङ्गे सैव तथैका जगदिदं तन्मयं विरहे ॥ १३३ ॥

हरिहरविधिमुख्या लोकपालाः समेता
वच इह मम सर्वैः श्रूयतां साक्षिभिर्यत् ।
निवसति यदि चेष्टं भावनायां सुतथ्यं
भवतु **शशिकला** यज्जन्मजन्मेऽपि जाया ॥ १३४ ॥

मम यदि सुकृतं स्यात्पूर्वजन्मार्जितं चे-
द्यदि सकलसुराणामर्चनं मेऽस्ति किंचित् ।
यजनहवनवेदाध्यासनं यन्ममास्ति
तदपि **शशिकला** मे प्राणनाप्या तदास्तु ॥ १३५ ॥

यदि भवति मतिर्या स्वान्तकाले गतिः सा
यदि भवति वचो मे सत्यमस्तीति धर्मम्।
मनसि वचसि काये यद्यहं जीवितं सा
तदिह मु····रामे चन्द्रलेखा प्रियास्तु ॥ १३६ ॥

इत्थं विज्ञाप्य देवेभ्यस्तूष्णीं तस्थौ कवीश्वरः।
अत्रान्तरे चन्द्रलेखा चिन्तां चक्रे तदोचिताम् ॥ १३७ ॥

दृष्ट्वा कविं शशिकला दृढपाशबद्धं
तन्नीयमानमनुगैरवनीश्वरस्य।
कर्तव्यमस्ति मम किं करवाणि किं वा
हा हा चकार मनसेति विचारयन्ती ॥ १३८ ॥

पुत्रस्तदेव जनकं परितोषयेद्यो
मित्रं तदेव न जहाति सुखेऽतिदुःखे।
भर्तारमेव परिगच्छति या तु नारी
ह्येतत्रयं निगदितं स्मृतिशास्त्रसारम् ॥ १३९ ॥

विद्युत्प्रगच्छति समं सहसाम्बुदेन
चन्द्रं यथा कुमुदिनी वरकौमुदी च।
प्राणेश्वरं समनुगच्छति वंशजा स्त्री
वेदा वदन्ति इति मे दृढनिश्चयोऽस्ति ॥ १४० ॥

इत्थं विचार्य हृदये मरणाय बुद्धिं
मुक्त्वा सुहर्म्यमवरुह्य सुसप्तभूमिम्।
बद्ध्वा दृढं नृपसुता परिधानवस्त्रं
तस्थौ मनो निजगुरोश्च निराशयन्ती ॥ १४१ ॥

एतस्मिन्नन्तरे नार्यस्तदा तद्भुवमागताः।
पराक्षेपेण धावन्त्यो कुर्वन्त्यश्चाश्रुपातनम् ॥ १४२ ॥

सुतारान्तःपुरे ताश्च प्रविष्टाः साश्रुलोचनाः।
विह्वला विश्वसत्यश्च त्राहि त्राहि पुनः पुनः ॥ १४३ ॥

त्राहि त्वं मरणात्सुदेवि तनयामारुह्य हर्म्ये महा-
नस्माकं ननु बिन्दुपातनमपि श्रोष्यत्ययं नैव सा ।
कृत्वा द्वारसुयन्त्रितं दृढतरं बद्ध्वा च वाचः स्वकं(?)
प्रासादादवनौ पतिष्यति ध्रुवं दृष्ट्वा हतं सद्गुरुम् ॥ १४४ ॥
या नार्यः समुपागता द्विजवरं द्रष्टुं समेत्याथ ताः
शोकादात्मभुवो यथा सुवचनैः संपीडिताः सत्कवेः ।
संचिन्त्याशु गता नृवीरनृपतेरन्तःपुरं सुप्रभं
विज्ञाता महिषी तदेव वचनं सख्याः समक्षं तदा ॥ १४५ ॥
स्त्रीणां वाक्यं तदा श्रुत्वा सत्यं सख्या उदाहृतम् ।
सुतारा विह्वलाङ्गी सा मूर्च्छिता पतिता भुवि ॥ १४६ ॥
ततो भाजनवासेन श्वसिता स्त्रीजनैः समम् ।
उत्थाय बोधिता चेत्थं शीघ्रं विज्ञापयेश्वरम् ॥ १४७ ॥
ज्ञातं देवि यदद्य शोकयजनं विप्राय माधा भृशं
भाव्यं तद्भविता स गोप्यवचनं धर्मस्तथा श्रूयताम् ।
पुत्री ब्रह्मवधे प्रणश्यति ध्रुवं लोकापवादं मह-
ज्ज्ञात्वेत्थं नृपवीरसिंहनृपतिं विज्ञापयाशु स्फुटम् ॥ १४८ ॥
नरवर दुहिता ते मृत्युमेष्यत्यति दूरं
कविवरनिहते सा सत्यमेतत्समक्षम् ।
द्वयमिह समुपेतं ब्रह्महत्या सुताया
निगमजनविरुद्धं सर्वथा नैव कार्यम् ॥ १४९ ॥
दुःखेन दीनवदना सुतायाश्चरितेन सा ।
मन्दं मन्दं तथोत्थाय निरुत्साहं गता नृपम् ॥ १५० ॥
इत्थं निशम्य वचनं नृपपट्टराज्ञी
स्त्रीणां वचः सुनयजं कलिकल्मषघ्नम् ।
गत्वा जगन्नृपवरं सहसाश्रुपूर्णा
स्त्रीणां तदेव यचनं चरितं सुतायाः ॥ १५१ ॥

शृङ्गारिभिः सुगणिभिः सुरराजलोकै-
रत्रान्तरे विनयमानपुरःसरं च ।
विज्ञप्तिरेव महती च पुनस्तदेव
श्रीवीरसिंहनृपतेः कथयांबभूव ॥ १५२ ॥

तदामात्यादयः सर्वे पुरोहितसमं जनाः ।
श्रीनृवीरं नमस्कृत्य प्रोचुः प्राञ्जलयो वचः ॥ १५३ ॥

स्त्रीहत्या ब्रह्महत्या द्वे त्याज्या सद्भिः सदा प्रभो ।
गर्हितं सर्वशास्त्रेषु जनाय वचनं महत् ॥ १५४ ॥

उक्तं च—

नहि भवति यन्न भाव्यं भवति च भाव्यं विनापि यत्नेन ।
करतलगतमपि नश्यति यस्य हि भवितव्यता नास्ति ॥ १५५

अवश्यंभाविभावानां प्रतीकारो भवेद्यदि ।
तदा दुःखैर्न बाधेरन्नलरामयुधिष्ठिराः ॥ १५६ ॥

तथा चोक्तं स्मृतौ—

आततायिनमायान्तमपि वेदाङ्गपारगम् ।
जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत् ॥ १५७ ॥

पूर्वं कृतं सुकविना महता श्रुतं नः
पाणिग्रहं वपुरविजते(?) पुरतः सखीनाम् ।
युक्तापराधमपि दैववशाच्च शङ्के
राजन्निवारय मनो ह्यनयाच्च पापात् ॥ १५८ ॥

एवं विचार्य बहुधा नृपवीरसिंहः
पथ्यं वचस्तदनु धर्मवती च मेने ।
आदिष्टवान्वरकवेर्मरणे निषेधं
तस्थौ तदागमनमेव निरीक्षमाणः ॥ १५९ ॥

तं भूपतिः कविवरं च विमोचयित्वा
दत्वा सुतामपि वरिष्ठगुणाय तस्मै ।

देशं तथा पुरशताधिकमेकरम्यं
वासांसि हस्तितुरगांश्च रथांश्च पत्तीन् ॥ १६० ॥
तां सुन्दरीं च सकलाभरणान्वितां वै
गावो महिप्यः(?) परिवारसमं सुदास्यः ।
यानानि भूपतिसमानसुखासनानि
प्रादात्प्रभुः सुतनयां कवये मुदा यः ॥ १६१ ॥
इत्थं भूमिपतेः परात्परतरं लब्ध्वा प्रसादं परं
काश्मीरः कविशेखरो मुदमगाच्छ्रीबिह्लणः सत्कविः ।
आदिष्टो नृपवीरसिंहप्रभुणा नेष्टं निजं मन्दिरं
संप्राप्तो वरपञ्चशब्दनिनदैर्मार्गेऽतिथीन्पूजयन् ॥ १६२ ॥
तत्रैव रतः कविवरः सहजान्विकारा-
न्नानाविधानभिमतान्सततं व्यनक्ति ।
........शशाङ्ककञ्जया(?) च दिवा निशायां
सापि प्रमोदमगमत्कविराजमेत्य ॥ १६३ ॥
इति वरचरितं यः श्रीकवेर्बिह्लणस्य
प्रपठति नियतं यः सावधानः शृणोति ।
भुवि अवनिपतीशैर्मान्यतां मानिनीभि-
र्व्रजति हि परमन्ते शाश्वतं धाम मर्त्यः ॥ १६४ ॥

इति **काश्मीरिकबिह्लण**कविविरचितं **बिह्लणचरिता**परनामधेयं
**चन्द्रलेखासक्तबिह्लण**काव्यम् ।